॥ श्रीगणेशायनमः ॥

# प्रौढमनोरमाटीकासहिताकेशवीया-

पद्धतिः। प्रारभ्यते ॥

*—*○*—*

आदित्यमज्ञानघनान्धकारच्छिदंमुदंसंततमादधानम्। ज-
गत्प्रसूतिस्थितिनाशहेतुं श्रीभास्करं भास्वररूपमीडे ॥ विघ्ननि-
घ्नमहंवन्दे विघ्नघ्नंविबुधार्चितम्। यस्यस्मरणतः साध्यंसिद्धिंप्राप्नो-
तिसत्वरम् ॥ श्री केशवार्यवचनानिजयन्तितानिनिर्दूषणानिब-
हुलार्थसुपूरितानि। धन्यानि शिष्यजनबुद्धिविवृद्धिदानिस्वल्पा-
क्षराणि बुधतोषविधायकानि ॥ अपिस्फुरत्पाण्डितमण्डलेन प्र-
चण्डपाण्डित्यमखण्डयेन। ज्ञानाधिराजस्यगुरुंनृसिंहंप्रचण्ड-
चण्डांशुमतिंतमीडे ॥ श्रीमच्छिवाख्यंगणितज्ञ कचूडामणिं-
सज्जनवृन्दवन्द्यम्। विदुर्विदेशंधिषणेनतुल्यंतंनौमिनित्यंविष-
याप्तिहेतोः ॥ श्रीकेशवार्यैर्गगनाब्धि४०वृत्तबद्धोदिताजातकपद्ध-
तिर्या। तैरेवतस्याविवृतिःकृताऽस्ति परंनतत्राऽस्तिसुयुक्ति-
कता ॥ संप्रार्थितःशिष्यगणेनयुक्तिः कार्यातिवर्यैर्दिवाक-
रोऽहम्। सत्रासमांतद्विवृतिंकरोमि यतोजनोमेसकलोऽपिर-
ञ्ज्यः ॥ यद्यप्यशक्याविवृतिर्विधातुंमयाजडेनामलकेशवोक्तेः।
तथाऽपिकुर्वेशिवपादपद्म प्रसादतःप्रौढमनोरमाख्याम् ॥ अथ
श्रीकौशिकमुनि वरवंशोद्भवोपर पारावार तीर निकटवर्ति
नान्दिग्राम निवासकृत् स्थलेश्वर सुन्दरचरण कमलयुगल भज-

नावाप्त समस्तविद्यः सकलागमाचार्यवर्यः श्रीकमलाकरदैवज्ञनन्दनः श्रीकेशवोग्रहकौतुकादिगणितस्कन्धं प्रथमतोविधिवद्व्यवस्थाप्याधुनासंक्षिप्ताक्षरवृत्तैर्निबद्धांबह्वर्थांसुलघुप्रक्रियां जातकपद्धतिं चिकीर्षुर्जन्मजन्मान्तरार्जितदुरितोत्पन्नप्रत्यूहव्यूहनिरासेनग्रन्थसमाप्त्यर्थंसमाप्तेऽपिग्रन्थेतत्प्रचयगमनार्थंशिष्टाचारपरिपालनेनशिष्यशिक्षार्थंचनमस्काराख्यमङ्गलमाचरन्ग्रन्थारम्भं शार्दूलविक्रीडितपूर्वार्द्धेनप्रतिजानीते ॥

नत्वाविघ्नपशारदाच्युतशिवब्रह्मार्क-
मुख्यग्रहानकुर्वेजातकपद्धतिंस्फुटत-
रांहोराविदांप्रीतये ॥

अहंकेशवोजातकपद्धतिंकुर्वेइतिक्रियाकारकयोजना । अ चक्रियाबलादहमित्यध्याहारः । जातस्यबालकस्यप्रागजन्मार्जितसदसन्मिश्रकर्मजनितशुभाशुभमिश्रफलनिरूपकंशास्त्रंजातकंतस्यपद्धतिःसुखोमार्गः । सरणिःपद्धतिःपद्येत्यमरोक्तेः । एवंतांजातकपद्धतिंकुर्वेकरोमि । किंकृत्वाविन्घपशारदाच्युतशिवब्रह्मार्कमुख्यग्रहान्नत्वा । विघ्नम्पातीतिविघ्नपोगणेशः । यथामृगप्राणहरेसिंहेमृगपतिप्रयोगोयथाचशकनृपप्राणहरेविक्रमादित्येशकनृपप्रयोगस्तथाविघ्नहरेगणेशेविघ्नपप्रयोगइतिध्येयम् । शारदासरस्वतीअच्युतोविष्णुः,शिवोमहादेवःब्रह्माप्रसिद्धःअर्कमुख्याश्रीसूर्यादयोनवग्रहाः, तान्नमस्कृत्येत्यर्थः । नन्वन्यजातकपद्धतिषुसतीषुकिमर्थमयंग्रन्थःकृतइतिग्रन्थस्यास्यवैयर्थ्यंप्रसक्तमापत्तिरित्याशङ्क्याह । स्फुटतरामिति । अतिशयेनःस्फुटेतिस्फुटतरातामतिलघुप्रक्रियामित्यर्थः । तथाचानेनविशेषणेनपूर्वश्रीनीलकण्ठश्रीधरश्रीपतिपूर्वरचितपूर्वपद्धतिभ्योवैशिष्ट्यंद्योतितम् । त-

चतुस्सर्वं भावद्दृग्बलादिगणितजातं बहुनायासेन साधितमस्तीति भावः। अतो नवीनग्रन्थप्रणयनमाचार्यस्य युक्तमेव। केचित्तु स्फुटतराप्रकटार्थमिति व्याचक्षते तदयुक्तम्। नहि प्राचीनश्रीपत्यादिग्रन्थेभ्योऽत्रपदार्थः प्रकटः समुपलभ्यते। अतोऽस्मदुक्तव्याख्यानमेव ज्यायो विशिष्टगुणाधायकत्वात्। अथ क्रियामात्रप्रवृत्तेः प्रयोजनपूर्वकत्वात् प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते, इति न्यायादत्र तदनभिधाने प्रवृत्त्यनुपपत्तिरित्याशङ्क्य पद्धतिकृत्यां प्रवृत्तौ प्रयोजनमाह। होराविदां प्रीतय इति। होरा जातकं विदन्ति जानन्तीति ते होराविदस्तेषां प्रीतये बहुच्छास्त्रगम्भीरार्थेन शिष्यान् बोधयितुं परिश्रान्तानां जातकशास्त्राभिज्ञानां सुगमोपायदर्शनेन तत्प्रीतय इत्यर्थः। ज्योतिर्विदां प्रीतय इति पाठे त्रिस्कन्धज्योतिःशास्त्रविदां प्रीतिजनकत्वमस्य ग्रन्थस्य प्रतीयते। न तु केवलजातकाभिज्ञानाम्। तेषां ज्योतिःशास्त्रैकदेशवेत्तृत्वेन संपूर्णज्योतिःशास्त्रवेत्तृत्वाभावात्। विशिष्टस्य स्कन्धत्रयस्यैव ज्योतिःशास्त्रपदाभिधेयत्वाच्च। उक्तं चैतद्वराहेण ज्योतिःशास्त्रमनन्तभेदविषयं स्कन्धत्रयाधिष्ठितन्तत्कार्त्स्न्योपनयस्य नाम मुनिभिः संकीर्त्यते संहिता। स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ होरान्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः॥ तस्मात् केवलहोराविदि न ज्योतिःशास्त्राभिज्ञताव्यवहार इति सिद्धम्। अन्यथा गणितस्कन्धैकदेशकरणाभिज्ञेऽपि गणितस्कन्धसिद्धान्तज्ञताप्रसङ्गः स्यात्। होराविदामित्यनेन तु केवलजातकविदां त्रिस्कन्धज्योतिःशास्त्रविदां च प्रीतिजनकत्वमुक्तं भवति। त्रिस्कन्धज्योतिःशास्त्रविदां होराज्ञत्वात्। आचार्येणाप्युक्तं ये ज्योतिर्विदस्त एव तद्धोराशास्त्रविदो भवन्त्येवेति। तस्माद्धोराविदामिति पाठः साधीयान्॥ अथोत्तरार्धेन ग्रन्थान्तरसाध्यामिति कर्तव्यतामल्पलग्नसाधनं चाह॥

यद्वैःस्पष्टतरोऽत्र जन्मसमयोवेद्योथखे
टाःस्फुटायत्पक्षेहिघटन्त उद्गमदृशा-
स्तत्पक्षसंस्थाःस्वयं ॥ १ ॥

अत्राख्यांपद्धतौयद्वैःकृत्वाजन्मसमयःस्पष्टतरोऽतिसूक्ष्मोवेद्योज्ञातव्यः। यत्राणितुश्रीभास्करेणोक्तानि। गोलोनाडीवलयंयष्टिशङ्कुघटीचक्रम्। चापंतुर्यंफलकंधीरेकंपारमार्थिकंयंत्रम्॥ एभ्यःसमयज्ञानंतैरेवोक्तंविस्तरभयान्नात्रप्रतिपाद्यते। अथास्मिन्जन्मकालेखेटाःसाध्याः। खेआकाशेअटन्तिगच्छन्तितिखेटाग्रहाइत्यर्थः। ननुमध्यमन्दस्पष्टभेदभिन्नत्वाद्ग्रहाःकीदृशाः-साध्याइत्यतआह। स्फुटाइति। फलादेशेस्फुटानामेवमुख्यत्वात् स्फुटाइत्युक्तंयुक्तम्। तदुक्तंसिद्धान्तशिरोमणौ। यात्राविवाहोत्सवजातकादौखेटैःस्फुटैरेवफलस्फुटत्वम्। इति। ननुब्रह्मसौराद्यादिपक्षाणांसत्वात्कस्मिन्पक्षेग्रहाःसाध्याइत्यतआह। यत्पक्षेहिघटन्तइति। यत्पक्षेऽस्मिन्पक्षेहीतिनिश्चयेनघटन्तेप्रत्यक्षमाकाशेदृश्यन्तेतस्मिन्पक्षे ग्रहाःसाध्याइत्यर्थः। उक्तंचदामोदरपद्धतौ॥ यान्तिसंसाधिताःखेटायेनदृग्गणितैक्यताम्। तेनपक्षेणतेकार्याःस्फुटास्तत्समयोद्भवाः॥ इति। ननुग्रहानयनमत्रार्षशास्त्रादेवकर्तुंयुज्यतेनतुमानुषात्तस्याययार्थत्वादितिचेत्सत्यम्। ग्रहानयनंमुनिकृतशास्त्रादेवकर्तुमुचितंपरंतत्रापिकालवशेनान्तरंपतति। यतउक्तंसूर्यसिद्धान्ते। शास्त्रमाद्यंतदेवेदंयत्पूर्वंप्राहभास्करः। युगानांपरिवर्त्तेनकालभेदोऽत्रकेवलः॥ इति। वासिष्ठेऽपि। इत्थंमाण्डव्यसंक्षेपादुक्तंशास्त्रंमयोत्तमम्। विस्रस्तौरविचन्द्राद्यैर्भविष्यतियुगेयुगे॥ विस्रसनंविस्रस्तिःशिथिलत्वमितियावत्। तदन्तरंबीजसंज्ञंब्रह्मगुप्ता

द्विभिर्मानुषैःस्वसत्ताकालेलक्षयित्वामुनिशास्त्रग्रहेषुनिक्षिप्यता-
दृशनिर्द्धपत्युक्ताःस्वग्रन्थरचितास्तद्युक्तमेव । तदन्तरमतीन्द्रि
यैर्मुनिभिस्तुल्यत्वात् ग्रन्थबाहुल्यभयाच्चनोक्तमपिदेयमित्युक्त-
मेव । तथाचब्रह्मसिद्धान्ते । संसाध्यस्पष्टतरंबीजनलिकाद्यैर्यन्त्रे
भ्यः । तत्संस्कृतग्रहेभ्यःकर्तव्यौनिर्णयादेशौ । इति । आचार्य
श्चापिवर्तमानघटनांविलोक्यग्रहकौतुकेग्रहानयनमरचि । तद्-
पिषष्टिमितेगतेऽब्देशिथिलंदृष्ट्वातत्तनयगणेशदैवज्ञैर्ग्रहलाघवेस्प-
ष्टंविरचितम् । तद्यथा । सौरोऽर्कोपिविधूच्चमङ्ककलिकोना
ब्जोगुरुस्त्वार्यजोऽसृग्राहूचकजंज्ञकेन्द्रकमथार्येसेषुभागः शनिः ।
शाक्रंकेन्द्रमजार्यमध्यगमितोमेयान्तिदृक्तुल्यतांसद्वै सौरिकप-
र्वधर्मनयसत्कार्पादिकंत्वादिशेत् ॥ अस्मिन्कालेऽनयैवघटनया
साधिताग्रहादृक्समत्वंयान्त्यतद्वयमेव घटनासमीचीनेतिवेद्य-
म् । ततस्तात्कालिकोऽर्कोयनभागयुक्त,इत्यादिनाकरणोक्तवर्त्म
नास्वोदयैःकृत्वाइष्टजन्मसमयेउद्गमःसाध्यः । उद्गमोराशीनामु
द्गमोलग्नमितियावत् । राशीनामुदयोलग्नमित्यमरोक्तेः । सउ
द्गमःसषड्भःसन्नस्तत्वंभवति । षड्भैःसहवर्ततेसतथाषड्राशियुक्तइ
त्यर्थः । अस्तंअस्तक्षितिजस्थंराशिः । राशिर्भंचगृहर्क्षंभानि-
भवनंचैकार्थंसंप्रत्ययइत्यभिधानात् । यत्रभास्वानस्तंयातितद-
स्तक्षितिजमित्युच्यते । एतदेवास्तर्क्षंज्योतिर्विदोजायाभावइति
वर्णयन्ति । यतोऽस्माज्जायायाःशुभाशुभविचारःक्रियते । अतो
जायाभावइति युक्तंनाम । एवंयत्रभावेलग्नादिकेयस्यविचार-
स्तत्त्वंज्ञातस्यभावस्यस्यात् । यथालग्नस्यतनुसंज्ञेत्यादिध्येयम् ।
चकारःसमुच्चयार्थेव्याख्येयः । लग्ननयनवासनानुपातद्वयेनसुग
मा । अथलग्नशब्देनार्कमेतच्चिन्त्यते लगतितल्लग्नम् । प्राक्कुजि
क्रान्तिमण्डलस्ययोगृहद्वयावयवोलग्नस्तद्गृहाद्यंलग्नमित्यभिधी-
यते । यःपरक्षितिजेलग्नस्तदस्तलग्नम् । यदूर्ध्वंयाम्योत्तरवृत्तल-

ग्नस्तद्दशमलग्नम् । योऽधोयाम्योत्तरवृत्ते लग्नस्तच्चतुर्थलग्नमिति-
भावचतुष्टयम् । उक्तं च भास्करीयगोले । यच्चलग्नमपमण्डलं कु
जेनत्कृहाद्यमिह लग्नमुच्यते । प्राच्यपरस्थिमकुजेऽस्तलग्नकं मध्यल
ग्नमिति दक्षिणोत्तरे ॥ इति । नन्विदं लग्नसाधनमयुक्तम् । त
थाहि । तत्र लग्नार्थं याइष्टघटिका गृह्यन्ते ता नाक्षत्राः सावना वा-
नाद्यः । तासां दुःसाध्यत्वात्प्रभासाधनार्थमनुपयुक्तत्वाच्च । ना-
पि द्वितीयः । विभिन्नजातिभ्यस्ताभ्यो नाक्षत्राणामुदयानामपनय
नस्यायुक्तत्वात् । भोदयाद्भोदयपर्यन्तं नाक्षत्रं दिनम् । तत्र द्वाद
शराशयः समुद्गमं यान्त्यत उदयानां नाक्षत्रत्वं स्पष्टमेव । न च तात्का
लिकार्ककरणेन सावनघटीनां नाक्षत्रीकरणं संपाद्य नाक्षत्राउद-
याः शोध्या इति पाच्यम् । प्रथमतस्तात्कालिकार्ककरणस्यैवायुक्त
त्वात । तथाहि । कुजे क्रान्तिमण्डलस्य यः प्रदेशो लग्नस्तत्किल-
लग्नम् । सूर्योदये सूर्यतुल्यं लग्नम् । सूर्यस्य क्रान्तिमण्डलावस्थि-
तत्वात् । राशिभोग्यांशा उदयानन्तरमेवोदयन्ति । अत उदयका
लीनार्कस्यैव भोग्यं गृहीतुं युज्यते । न तात्कालिकार्कस्य । किंच
नाक्षत्रनाडीमयेऽहोरात्रसमे काले ६०। १० यावतात्कालिका-
र्काल्लग्नं क्रियते न तावदर्कसमं भवति । यावदौदयिकार्कात्क्रियते-
तावदर्कसमं भवतीत्यन्वयव्यतिरेकाभ्यां प्रतीतेर्युक्तितश्च तात्कालि
कीकरणमयुक्तमिति । अत्रोच्यते । घटिकादिकसार्धमानादि
त्युक्तेर्नाक्षत्रा इष्टघटिका गृहीत्वौदयिकार्काल्लग्नं साध्यमिति मू-
लयुक्तिः परं नाक्षत्रनाडीनामज्ञानात्प्रभासाधनोपयोगाच्च सा-
वना एव घटिकाः पूर्वैर्लग्नानयने स्वीकृताः । अथ तासां नाक्षत्रत्वं-
विधेयम् । तत्रानुपात । यदि घटीषष्ट्या सूर्यगतिकला लभ्यन्ते त-
दिष्टघटीभिः किमिति इष्टसंबन्धिन्यो गतिकलाः स्युः तासां प्राणी
करणार्थं द्वितीयोऽनुपातः । यदि राशिकलाभिः १८०० सूर्याधि
ष्ठितराश्युदयासवो लभ्यन्ते तदिष्टघटीसंबन्धिगतिकलाभिः किमि-

तिलक्षाद्दृष्टघटीसंबन्धिगतिकालोत्पन्नासवः । सावनसंख्यातोनाक्षत्रसंख्यायाअधिकत्वात्सावनघटीषुयोज्यास्तानाक्षत्रइष्टघटिकाभवन्ति । एवंप्राप्तिपरमलाघवत्रिकैराचार्यैरिष्टघटीसंबन्धिन्योगतिकलाएवरवावौदयिकेक्षिप्ताः । तथाकृतेतात्कालिकार्कएवंसंजातः । यतइष्टघटीसंबन्धिन्योगतिकलानामिष्टघटीसंबन्धिसूर्यचालनम् । तद्यावदौदयिकार्केक्षिप्यतेतावत्तात्कालिकार्कएवभवतीतिसुप्रसिद्धम् । एतत्तात्कालिकार्कभोग्यंसावननाक्षत्रनाड्यन्तरतुल्यमेवोदयार्कभोग्यान्न्यूनमायाति । उदयार्कभोग्यंनाक्षत्रनाडीभ्यस्तात्कालिकार्कभोग्यंसावनघटीभ्यःशोध्यंशेषंसममेव । अतस्तात्कालिकार्ककरणेनसावनघटीनांनाक्षत्रत्वंभवतीतियुक्तम् । तथाचोक्तंसिद्धान्ते । लग्नार्थमिष्टघटिकायदिसावनास्तास्तात्कालिकार्ककरणेनभवेयुरार्क्ष्यः । इति । अत्रमन्दावबोधार्थंप्रकारान्तरेणवामनानिग दितासिद्धान्तशिरोमणिवासनावार्तिकेऽस्मत्पितृचरणैःश्रीनृसिंहाचार्यैः । औदयिकार्कभोग्यकालेशोध्येनाक्षत्रनाडीमयेष्टकालाच्छोधकादपनीतेयावदवशिष्यतेतावदेवेष्टेनकेवलशोध्येइष्टेनकेवलशोधकादपनीतेऽवशिष्यतइतिप्रसिद्धम् । तच्चसावननाक्षत्रनाड्यन्तरतुल्यमिष्टंकल्पितम् । तन्नाक्षत्रघटीभ्योयावदपनीयतेतावत्सावनाइष्टघटिकाभवन्ति । यावदौदयिकार्कभोग्यकालादपनीयतेतावत्तात्कालिकार्कभोग्यकालोभवति । अतस्तात्कालिकार्कात्सावनघटीभिर्लग्नंसाध्यमित्युपपन्नम् । अथवौदयिकार्कान्नाक्षत्रेष्टकालात्साध्यम् । प्रकारद्वयमपिसयुक्तिकमेव । अतःसर्वमवदातम् । एतद्दृश्यलग्नंस्वोदयैःसाध्यम् । स्वोदयास्तुलङ्कोदयाऽधीनाइतिप्रथमतोलङ्कोदयवासनोच्यते । अपमवृत्तेचेद्वविभागेनसर्वेगणयस्तुल्यप्रमाणाएवसन्ति । नाडीवृत्तेतुकालांशविभागेनसर्वेराशयउन्नच्छन्ति । निरक्षेतुतन्नाडीवृत्तंसममपूर्वापरंसमभण्डलवद्-

मति । क्रान्तिवृत्तं तु दक्षिणोत्तरतस्तिरश्चीनत्वेनोदेति । क्रान्तिवृत्तस्थो मेषाद्यवतिरश्चीन उदेति तावन्नाडीवृत्तेऽष्टाविंशतिभागाः किंचिन्न्यूना एवोद्गच्छन्ति । तिर्यगेवमुद्गच्छतोऽपममण्डलस्यातिरश्चीनत्वेनोन्मण्डलाहोरात्रसंपातात् त्र्यस्राणि क्षेत्राण्युत्पद्यन्ते । तद्यथा । मेषान्तापक्रमज्या निरक्षक्षितिजे भुजः, तद्दोर्ज्या-१७१९ पमण्डलेकर्णः, तद्वर्गान्तरपदं मेषान्ताहोरात्रवृत्ते कोटिः । एवं वृषान्तापक्रमज्या भुजः, वृषान्तज्या कर्णः, तद्वर्गविश्लेषपदं वृषभान्ताहोरात्रवृत्ते कोटिः । एवं द्वन्द्वान्ते त्रिज्या कर्णः, परमापक्रमज्या: १३९७ भुजः, परद्युज्या कोटिः । तदेवं प्रसाधितानां कोटीनां ज्यारूपत्वेन ज्याखण्डानां द्युज्यावृत्तीयत्वाभावेन त्रिज्यावृत्तेपरिणामस्य चापीकृतानि । तत्र यत्प्रथममेकराशिज्यासंभूतं स मेषोदयकालः । द्वितीयं राशिद्वयस्य । तृतीयं राशित्रयस्य । राशीनामाद्यन्तकालज्ञानार्थं प्रथमं द्वितीयात् द्वितीयं तृतीयाद्विशोध्य मेषादित्रयाणामुदयास्त एवावशिष्यन्त इत्युपपन्नम् । त एव विलोमाः कर्कादित्रयाणां भवन्ति । यतः कन्यान्ताद्विलोमं कर्कटाद्यवधि दोर्ज्यापक्रमज्याद्युज्यादिभिः कादिसाम्येनैवोपजायमानत्वात्-फलस्योत्क्रमतस्तुल्यताया एवावलम्बनत्वाच्चोत्क्रमस्यादित्युपपन्नम् एवं तुलादिषट्कस्यापि विलोमाद्बोद्धव्यम् । तथोपजातानामेषां न्यासः ॥ एतेषूक्तजातानुक्ततुल्यादावुक्तानागतुङ्गदस्रा इत्याद्यो लङ्कोदयाः पलात्मकाः । अथातो निजपतनजननमभवनसमुद्रमनमानसाधनवासना प्रोच्यते । अत्र नागगनं समन्तात्सलिलमिव दृश्यते तद्भ्रान्तिजम् । तथा च सत्पद्यम् । अवनीगगनं समन्ततः सततं जलमिवाऽवलोक्यते । क्षितिपृष्ठनिवासि-

| | | |
|---|---|---|
| मे | १६७० | मी |
| वृ | १७९५ | कु |
| मि | १९३५ | म |
| क | १९३५ | ध |
| सि | १७३५ | वृ |
| क | १६७० | तु |

मानुषक्षितिजं तद्गणकानिरूचिरे ॥ तस्य निरक्षितिजेन यदूर्ध्वाध
रमन्तरं तच्चरम् । दिग्द्वयेऽपि चरसत्त्वेनास्यैकदिक्त्वाभिप्रायेणाच
रार्द्धं रवेस्तेनैतद्व्यपदिश्यते । तथा चान्तरभूतेन स्वस्वचरार्द्धेन निरक्षो
दया युतोना: कर्त्तव्या: । स्वोदया भवन्तीत्युत्सर्गः । वस्तुतस्तु मे-
षादिरुन्मण्डले क्षितिजे च समकालमेव लगति क्षितिजोन्मण्डल-
संपात एव मेषादेरुदयस्थानात् मेषान्त: पुनर्मेषनिरक्षोदयासुभि-
रुन्मण्डले लगति । स्वकुजे तु मेषचरखण्डतुल्यकालेन पूर्वमेव ल-
गतीत्यत: प्रथमराशिचरखण्डोनं प्रथमराशिनिरक्षोदयप्रमाणं स्व
देशे प्रथमराशिप्रमाणं स्यादित्युपपन्नम् । एवं मेषादेर्वृषान्तो द्विरा
शिनिरक्षोदयप्रमाणयोगेनोन्मण्डले लगति स्वकुजे तु द्विराशिच-
रखण्डयोगतुल्यकालेन पूर्वमेव लगति । अतो द्विराशिचरखण्डोनं
द्विराशिनिरक्षोदयमानं स्वदेशे द्विराशिमानं भवतीत्युपपन्नम् तत्प्र
थमराशिप्रमाणेन यावदूनी क्रियते तावत्केवलं द्वितीयराशिप्रमाण-
मेवावशिष्यतइति प्रथमराशिचरार्द्धोन प्रथमराशिनिरक्षोदयप्रथ-
माणरूपि प्रथमराशिमाने द्वितीयराशिमानादनन्तरोक्तात्शोधिते द्वि
तीयराशिचरार्द्धोनं द्वितीयराशि निरक्षोदयप्रमाणं स्वदेशे द्वितीयरा
शिप्रमाणं भवतीति जातं एवं मेषादेर्मिथुनान्तस्त्रिराशिनिरक्षो
दयप्रमाणयोगेनोद्वृत्ते लगति स्वक्षितिजे तु त्रिराशिचरखण्डयोग-
तुल्यकालेन पूर्वमेव लगतीत्यतस्त्रिराशिचर खण्डोनं निरक्षजतृ-
तीयराशिमानं स्यादित्युपपन्नम् । अतो निरक्षोदया: क्रमस्थानि-
जै: क्रमस्थैश्चरार्द्धैरूना: स्वदेशे मेषादित्रयाणामुदया भवन्तीति सि-
द्धम् । एवं मेषादे: कर्कान्तो निरक्षजचतूराशिप्रमाणयोगेनोन्मण्ड-
ले लगति । स्वक्षितिजे तु द्विराशिचरखण्डयोगतुल्यकालेन पूर्वमे-
व लगति । अतो द्विराशिचरखण्डोनं निरक्षजचतूराशिमानं स्वदे-
शे चतूराशिप्रमाणं स्यादिति जातम् । अस्मिंस्त्रिराशिचरखण्डोन

त्रिराशिनिरक्षोदयप्रमाणयोगरूपेणस्वदेशजत्रिराशिप्रमाणेनो-
नीकृतेतृतीयराशिचरार्द्धयुक्तंनिरक्षजचतुर्थराशिमानंस्वदेशेचतु-
र्थराशिमानंस्यादितिजातन्तथा चबालावबोधार्थबीजक्रियया लि-
ख्यते । तत्रस्वदेशजत्रिराशिप्रमाणयोगः । निरक्षजत्रिराशिप्रमा
णम् १ त्रिराशिचरार्द्धम् १ । अथमस्मात्निचराप्र १ । त्रिरांच १
चतूराशिमानयोगात्शोध्यः । तत्रनिरक्षजत्रिराशिप्रमाणयोगे-
निरक्षजचतूराशिप्रमाणयोगाच्छोधितेनिरक्षजचतुर्थराशिप्रमा-
णमेवावशिष्यते । अथत्रिराशिचरखण्डयोगः क्षयगतोत्रिराशि-
चरखण्डयोगात्क्षयगतात्शोध्यमानः संशोध्यमानमृणंस्वंस्यादि
त्यादिनाधनगतोभवति अथधनर्णयोरन्तरमेवयोगइतिकृतेतृती
यराशिचरखण्डंधनगतमवशिष्टम् । अतस्तृतीयचरार्द्धयुतन्निर-
क्षजचतुर्थराशिमानंस्वदेशेचतुर्थराशिमानंस्यादितिजातम् । अ
थमेषादेः सिंहान्तोव्यक्षजपञ्चराशिमानयोगेनोदृतेलगति । स्व-
क्षमाजेतुप्रथमराशिचरार्द्धकालेनपूर्वमेवलगत्यतः प्रथमराशिच-
रार्द्धोनंनिरक्षजपञ्चराशिमानंस्वदेशजपञ्चराशिमानंस्यादितिजा
तम् । अस्माच्चतूराशिप्रथमाणयोगेप्राग्वत्शोधितेद्वितीयराशिच-
रार्द्धयुतं व्यक्षजपञ्चमराशिमानंस्वीयपञ्चमराशिमानंस्यादित्युप-
पन्नम् । एवमजादेःकन्यान्तोव्यक्षजषड्राशिमानयोगतुल्यकाले-
न दृत्तं क्षितिजेचलगति अत्रापिस्वदेशजपञ्चमराशिमानयोगेशो
धितेप्रथमराशिचरार्द्धयुतंव्यक्षजषष्ठराशिमानंस्वदेशजषष्ठराशि-
मानंस्यादितिसिद्धम् । अतोनिरक्षोदयाउत्क्रमस्थाउत्क्रमस्थैस्वर
खण्डैः स्वैर्युताः कर्कादित्रयाणांमानानिस्युरितिनिष्पन्नम् । अ-
नयैवयुक्त्यासाधितानितुलादेरनुलोमंमीनान्तावधिकराशमा-
नानिकन्यान्ताद्विलोमंमेषाद्यवधिकराशिमानतुल्यानिभवन्त्यत
एतान्यवोदयमानानिविपरीतानितुलादिषण्णांमानानिस्युरिति

सिद्धम् । तदुक्तंसिद्धान्तशिरोमणौ क्रमोत्क्रमस्थाश्चरखण्डकैःस्वैः
क्रमोत्क्रमस्थैश्चविहीनयुक्ताः । मेषादिषण्णामुदयाःस्वदेशे तुला-
दितोऽमीचविलोमसंस्थाः इति अथार्कलग्नानयनार्थमयनांशा
योज्यन्ते तत्कारणमयनांशस्वरूपंचनिरूप्यते । अयनांशशब्देन-
क्रान्तिपातः । क्रान्त्यर्थंपातःक्रान्तिपातइत्यन्वर्थसंज्ञेयम् । पा-
तोनामनाडीवृत्तक्रान्तिवृत्तयोःसम्पातः क्रान्त्यभावयोग्यस्थानं
चक्रशुद्धःसक्रान्तिपातःस्यात् । अस्यैवमुञ्जालाद्यैरयनचलनमि-
तिनामधृतम् । यतोऽनेनक्रान्तिपातेनायनस्यविषुववृत्तापवृत्त-
सम्पातात्प्रवृत्तराश्यन्तरगमनस्ययथास्थितक्रान्तिवृत्तस्यरेवत्यन्त-
मधिकृत्यप्रवृत्तराश्यन्तरगमनात्प्राक्पश्चाद्वाचलनंजायतइत्यतो-
ऽयनचलनमितियुक्तम् । अयनचलनांशाइतिवक्तव्येलाघवाद-
यनांशाइतिव्यवह्रियन्ते । कथंपुनःप्राक्पश्चाद्वाचलनमित्येतदु-
च्यते । इष्टेऽह्निमध्याह्ने द्वादशाङ्गुलशङ्कोश्छायाविलक्षणीया । त-
तःदिनार्द्धद्युतेस्त्रिज्यकाघ्न्या हृतायाःस्वकर्णेनचापांशकाःस्युर्नतां-
शाः । दिनार्द्धेयियुक्तायुतास्तेपलांशैरुदग्दक्षिणेभाग्रकेऽक्रापमः
स्यात् । ततःक्रान्तितोवैपरीत्येनभानुर्भवेदितिभास्कराचार्यो
क्त्याभास्करःसाध्यः । परंसमायनःस्यात्क्रान्तेःसकाशात्साधि-
तत्वात्तथाचकरणोक्तवर्त्मनाऽन्योपितात्कालिकःस्पष्टभास्करः-
साध्यः । तयोरन्तरमयनांशाःस्युः । तच्चकरणागतेऽर्केछायार्का-
दूनेधनायनांशाः । अधिकेत्वृणायनांशाः । धनायनांशेषुप्राक्-
चलनमृणायनांशेषुपृष्ठगतिर्वेदितव्यम् । तस्मादसौक्रान्तिपा-
तोऽन्वर्थत्वात्खगेक्रान्त्यानयनाययोज्यइतिसिद्धम् । क्रान्तिव-
शाच्चरस्वरवशादुदयाउदयवशाल्लग्नमतोलग्नार्थमर्केऽयनांशायो-
ज्याइतियुक्तम् । उक्तञ्चश्रीभास्कराचार्यैः । क्रान्तिवशाच्चरमुद-
याश्चरदललग्नागमेततःक्षेप्याःइति । एतत्तु धनायनांशविषय-

म् । अयनांशास्तु वियोज्या इत्यनुक्तमपि बुद्धिमता ज्ञेयम् । अयनांशा अपि पूर्वं स्थिता इति श्रूयते । तथा च वराहसंहितायाम् । आश्लेषार्द्धाद्दक्षिणमुत्तरमयनं रवेर्धनिष्ठाद्यम् । आसीत्कदापि नूनं येनोक्तं पूर्वशास्त्रेषु । अत्र संज्ञप्रश्लिष्टसार्धांशद्वयोर्विंशत्ययनांशा एव २३ । २० इदं संभवति । तस्मात् वराहसत्ताकालेऽयनांशा आसन् । अधुनापि धनायनांशा एव नक्षयगतायनांशा इति वेदितव्यम् । यत्तु भूनेत्रातिथ्युन्मिते १५२१ शालिवाहनशकाद्यातवर्षगणे तेच सांप्रतं सार्द्धषोडशायनांशाः क्षयगताः सन्ति । छायार्कात्करणागतस्यार्कस्याल्पत्वात् । इति वदता केनचिन्मौढ्यमिति केनच्छायार्कात्करणागतेऽल्पे सत्यृणायनांशा इति स्वीकृतम् । तदसदेवेति वयं ब्रूमः । यदि सांप्रतमृणायनांशास्तर्हि तेऽग्रनयनार्थं सर्के वियोज्याः स्युः । किंचायनांशहीनं तनुः स्यादित्यत्रापि संशोध्यमानमृणं स्वं स्यादित्यादिनाऽयनांशयुक्तं तनुः स्यादिति प्रसज्येत । अपि च विषुवद्वृत्तात् क्रान्तिवृत्तावधिदक्षिणोत्तरगमनं क्रान्तिरिति विषुवत्क्रान्तिवृत्तपूर्वसंपाते क्रान्तेरभावस्तत्सायनग्रहदोर्ज्याया अप्यभावेन भाव्यमतस्तत्सायनग्रहः शून्यराश्यादिरिति तावत् सर्ववादिसिद्धम् अथ प्राक्चक्रे चलिते संपातोऽपि मेषादेः प्रागेव भवतीति तत्रस्थो ग्रहो मेषादेः सकाशान्न्यून एव भवत्यतस्तत्रायनांशयोगेनैव शून्यराशिता भवति । अयनांशशोधने तु शून्यराश्यादितानवाप्यमपि स्यादिति दूषणान्तरम् । न च ऋणायनांशा अपि योज्या इति वाच्यम् । तथा सति धनर्णयोरन्तरमेव योग इति सिद्धान्तो व्याकुप्येत । अन्यच्चाखिटेऽयनाख्ये धटपूर्वके स्वमखं- क्रियाद्ये स्युरिमेऽयनांशाः इति प्राचीनोक्तप्रकारेणापीदानीं धनायनांशा लभ्यन्तेऽतस्तैः सह विरोधोऽपि दूषणम् । तस्मादिदानीं करणागतार्कात् छायार्कस्याधिकत्वेन चक्रस्य प्राक्चलितत्वात् धना

यनांशाद्भूत्यवधेयम् । अतएवतात्कालिकोऽर्कोऽयनभागयुक्तद्भूतिसंगच्छते ।छायार्कात्करणागतेऽर्केन्यूनेप्राक्चक्रंचलितंज्ञेयम् । तदाधनायशाद्भूत्यर्थः । धनायनांशाएवाधुनासन्तीतिमौरभाष्येश्रीमन्नृसिंहदैवज्ञैरप्युक्तम् । ब्रह्मसिद्धान्तेऽपि । छायार्काक्रान्तरांशास्युश्चलांशाःस्वमिनाधिके । छायार्केत्वृणमूनेप्राक्पश्चाच्चक्रंचलत्यते ॥ स्पष्टार्थमेतत् । तस्मात्करणागतादधिकेछायार्केऋणायनांशाइतिमतंप्रत्याख्येयमेव । अथोदयैःसाध्यमानंलग्नंनाडीमण्डलक्रांतिमण्डलसंपातादायाति । अपिचितंचरेवतीयोगतारकतद्भूत्ययनांशहीनंक्रियतइतिस्पष्टं अन्येतु लग्नंसायनमेव नायनांशहीनंकार्यं । मुनिभिरनुक्तत्वात्सायनादेवफलादेशःकर्तव्यइत्याहुस्तन्मन्दं यतउक्तंशाकल्यसंहितायांपञ्चमाध्यायेदृक्कर्मेपमाधने चलसंस्कृतलग्नज्यालम्बज्याचेद्भवत्यपिचलायनांशास्तैर्धनगतैर्युक्तमृणागतैरूनितंलग्नंसंस्कृतमित्युच्यते यद्यत्रभगवतोब्रह्मणःसायनमेवलग्नमभिमतंस्यात्तर्हिपुनरयनांशयोजनंनोक्तंस्यात् । सायनलग्नेऽयनांशयोजनेनर्द्विगुणायनांशायोजिताद्भूतिजायते । द्विगुणायनांशयोजनंतुवासनाशून्यत्वादन्यार्षग्रन्थेश्वप्रसिद्धत्वाच्चनयुक्तम् । ततोनिरयणांशंलग्नंकार्यमित्याशयोगम्यते । तस्मादयनांशहीनंतनुःस्यादितिसर्वंसमञ्जसम् । पुनराहुरेकदेशिनः । चलांशसंस्कृतःस्पष्टग्रहएवस्फुटग्रहइतिशाकल्योक्तेरयनांशयुक्ताएवग्रहास्पष्टाःस्युः । तेभ्यएवयात्राविवाहोत्सवजातकादौफलादेशःकर्तव्यः । तथासायनयोरेवचन्द्रार्कयोरन्तरात्तिथिःसाध्या । नक्षत्रंसायनादेवसाध्यम् । योगोऽपिसायनरवीन्द्वोर्योगादेवसाध्यइति । तदप्यतिमन्दम् । यतश्चलांशसंस्कृतद्भूत्यस्यैवान्तरार्द्धंनिद्दम् । अयनाभ्युपगमादेतस्योपचारस्यचेदिति । अस्यार्थः । एतस्य चलांश संस्कृतस्य ग्रहस्य स्पष्टग्रहइत्युपचारः क्रियते । वस्तुतोनायं स्पष्टग्रहः किंतु कार्या-

न्तर वशात्स्पष्टत्वेनो पचर्यंत इति भाव: । तत्रहेतुमाह ।
अयनाभ्युपगमादिति । अयनंराश्यन्तरगमनंतस्याभ्युपगमस्त-
स्मात् । क्रान्तिसाधनार्थमितितात्पर्यार्थः । एतदुक्तमुक्तं वृद्धव-
सिष्ठसिद्धान्ते । खचराश्चलन्तितस्मात्पूर्वेयुक्ताश्चपश्चिमेहीना: ।
तस्मादपमच्छायाचरदललग्नादिकंततःसाध्यम् । रोमशेऽपि ।
तत्संस्कृतग्रहात्क्रान्तिलग्ननत्युन्नतिस्फुटम् । इति । सोमसिद्धा
न्तादिष्वप्येवमेव । अतोऽयनांशसंयुताग्रहाःक्रान्तिसाधनार्थमेव
स्पष्टाभवेयुर्नतिथ्यादिसाधनार्थंफलादेशार्थंचेत्यत्रप्रौढंनिरूढ
म् तस्मात्परिहार्योयमपावनयावनमतानुसारिणोपिराजपथः।
पुनर्भवेदेवम् । यदिस्पष्टग्रहसंस्कारत्वेनैवचलांशयोजनंमुनीना
मभिप्रेतंस्यात्तर्हिमन्दशीघ्रफलादिस्पष्टग्रहोपकरणसंस्कारप्रक-
रणएवोक्तंस्यात्क्रान्तिप्रकरणेऽभिहितमतःक्रान्तिसानेतस्योपयोग
इतिबालैरपिबुध्यते । नचैवंग्रहाणांनिरयणत्वेसंक्रान्तिरपिनिर-
यणैवास्तामितिवाच्यम् । इष्टापत्तेः । संक्रान्तिषुतथाबालस्तदा
येऽप्ययनेतथा । इतिमुनिभिरुक्तत्वात्सायननिरयणसंक्रान्त्योरु
भयोरपिपुण्यकालः । यद्यपिराशयोनिरयणाइतिनिरयणैवसं-
क्रान्तिस्तस्याएवव्यवहारयोग्यत्वम् । तथापिचलसंस्कृततिग्मां-
शोःसंक्रमोयःसमंक्रमः । अत्रागलस्तनइवराशिसंक्रान्तिरिष्यते ।
इतिवृद्धवसिष्ठसिद्धान्तोक्तेःसायनसंक्रान्तौपुण्याधिक्यमितियुक्त-
मुत्पश्यामः । अतएवाहुःस्मृतिविदश्चरणाःश्रीशिवदैवज्ञामुहूर्त
चूडामणौ अयनांशकलाःस्पष्टरविगत्युद्धताःपुरादिनाद्यैर्बहुपुण्या
स्युर्मेषादिभ्यश्चलक्रमाः ॥ इति तस्मात्सायनग्रहेभ्यस्तिथ्यादिसा
धनमयुक्तत्वादार्षविरुद्धत्वादद्ययावत्प्रामाणिकैरकृतत्वाच्चन-
कार्यमित्यलंप्रसङ्गागतयामतान्तरदूषणकथाप्रस्तावनया । एतदु-
क्तंप्रसक्तानुप्रसक्तंश्रीपतिटीकाकारैरनुक्तमपि । यन्मयाल्पम-

तिनाधुनाकृतङ्गोपि राजमतखण्डनं वरम् । तच्छिन्नस्य सुगुणोदं-
याभरालोकनप्रभवं वभवं किल ॥ इदानीं प्रकृतमनुसरामः । उ-
दयलग्नं षड्भयुतमस्तलग्नं भवति । उदयास्तक्षितिजयोर्मध्येऽर्द्धं-
स्यैवापममण्डलस्य व्यवस्थितत्वात् । तदुक्तं गोले । योऽभ्युदेति-
समयेन येन तत्सप्तमोऽस्तमुपयाति तेन च । राशिरूर्ध्वमपमण्डलं कु-
जाद्दर्धमेव सततं यतः स्थितम् । इति । अतः शोभनमुक्तमस्तचं स
षड्भः स च, इति । एवं भावद्वयमभिधायेदानीमन्यभावद्वयसाधनं
विवक्षुस्तावत्तदङ्गभूतनतोन्नतसाधनं वृत्तार्धेनाह ॥

रात्रेः शेषमितं युतं दिनदलेनाह्नोगतं-
शेषकं विश्लेष्य खलु पूर्वपश्चिमनतं त्रिं-
शच्च्युतं तच्चोन्नतम् ।

रात्रेः शेषमिति । इतमुक्तं वा दिनदलेन युतं स-
त् खल्विति निश्चयेन क्रमेण पूर्वं पश्चिमनतं स्यात् । एतदुक्तं-
भवति । यद्यर्धरात्रानन्तरं जन्म स्यात्तदा रात्रिशेषं दिनार्द्धेन यु-
क्तं कार्यं पूर्वनतं स्यात् । यद्यर्धरात्रात्प्राक् जन्म तदा रात्रिगत-
न्दिनार्धयोर्ज्यं पश्चिमनतं स्यात् । अह्नोऽदिनस्य गतं शेषकं वा दिनद-
लेन विश्लेष्य मन्तरितं कार्यं दिनदलात् शोध्यमिति यावत् । क्रमेण
पूर्वपश्चिमनतं स्यात् । अथोन्नतमाह । त्रिंशच्च्युतमिति । न-
तं त्रिंशतश्च्युतं शुद्धं सदुन्नतं स्यात् । पूर्वनते त्रिंशच्छोधिते पू-
र्वोन्नतं पश्चिमनते त्रिंशच्छोधिते पश्चिमोन्नतमित्यर्थः चकारः समु-
च्चयार्थः । अत्रोपपत्तिः । खगोलस्य प्रागपरविभागेन कपालद्वयं-
भवति । तत्र निशामध्यात् मध्याह्नपर्यन्तं त्रिंशद्घटिकान्तरे भानो-
रारोहणमार्गावधि प्राक्कपालम् । तथा मध्याह्नात् निशीथपर्यन्तं-

त्रिंशद्घटिकान्तरेणभानोरवरोहणमार्गविधिप्रत्यक्कपालम् । एवं प्रागपरकपालयोर्मध्येमध्यान्हात्पूर्वंयायावतीभिर्घटीभिः सविता-न्नत उपलक्ष्यतेसनतकालः । तथामध्यरात्रापिचयायावतीभिर्घ-टीभिरुन्नत उपलक्ष्यतेस उन्नतकालः । एवंतौत्रिंशतः शुद्धावन्यथा भवतः । ततः खगोलस्यक्षितिजसंनिवेशनेनविभागचतुष्टयंभव-ति । तथाचप्राक्कपालेसूर्येक्षितिजादूर्ध्वस्थेसतिदिनगतंतथाधः-स्थितेरजनीशेषम् । पश्चिमकपालेतुकुजोर्ध्वस्थेदिनशेषमधःस्थेरा त्रिगतम् । एवंदिनगतशेषेदिनार्धात्शोधितेतथारात्रिशेषगते-दिनार्धेनयुतेसतोप्रागपरनतेस्तः । अतउपपन्नंरात्रेःशेषमित्या-दि । नतोन्नतेत्रिंशद्घटीमध्येऽतोनतन्त्रिंशच्छुद्धमुन्नतंस्यात् । अतोयुक्तमुक्तंत्रिंशच्च्युतंचोन्नतमिति । अथयदर्थमेतावानुपक्र मस्तदधुनादशमचतुर्थभावसाधनंवृत्तोत्तरार्द्धेनाह ॥

## यत्पूर्वोन्नतषड्भयुक्तरवितः पश्चान्न-तादित्यतोयल्लङ्कोदयकैश्चलग्नमिवत-न्माध्यंसषड्भसुखम् ॥ २ ॥

यदिति । पूर्वोन्नतषड्भयुक्तरवितःलङ्कोदयकैर्लग्नमिवलग्नं यत्भवेत्ततमाध्यंस्यादितियोजना । पूर्वस्मिन्कपालेउन्न-तम्पूर्वोन्नतम् । षड्भैः राशिषट्केनयुक्तस्यासारविश्चषड्भयुक्त-रविः । पूर्वोन्नतञ्चषड्भयुक्तरविश्चपूर्वोन्नतषड्भयुक्तरवीताभ्या-मितिपञ्चम्यर्थेतसिः । मध्येऊर्ध्वेयास्मोन्तरवृत्तेभवंमाध्यन्दश-मलग्नमित्यर्थः । एवम्पश्चान्नतादित्यतोलङ्कोदयकैर्लग्नमिवय-ल्लग्नन्तत्माध्यंस्यात् । पश्चान्नतञ्चादित्यश्चपश्चान्नतश्चादित्यौता-भ्यामितिपञ्चम्यर्थेतसिः । एतदुक्तंभवति । अर्धरात्रादुपरिदि-नार्धपर्यन्तंपूर्वकपालेउन्नतमिष्टकालं प्रकल्प्यसषड्भसायनता-

त्कालिकार्कंसूर्यंप्रकल्प्यलङ्कोदयान्स्वोदयान्प्रकल्प्यतद्भोग्यभा-
गैरुदयोहत: स्वइत्यादिनालग्नवद्यत्साधितन्तद्मध्यलग्नं स्या-
त्। एवंदिनार्द्धादुपरिरात्र्यर्धपर्यन्तम्पश्चिमकपालेनतमिष्टकालं
प्रकल्प्यकेवलसायनतात्कालिकार्कं सूर्यंप्रकल्प्यलङ्कोदयानुद-
यान्प्रकल्प्यतद्भोग्यभागैरित्यादिनालग्नवद्यत्साधितं तद्मध्य-
लग्नं स्यात् । तद्मध्यलग्नं सषड्भंषड्राशियुक्तंसत्सुखचतुर्थल-
ग्नम्भवति । अत्रोपपत्तिः । मध्यान्हे सूर्यतुल्यमेवमध्यलग्नं स्या-
द्मध्यलग्नमितिदक्षिणोत्तरवृत्तयुक्तत्वात्। मध्यान्हादग्रेयावती-
षुमध्यलग्नमपेक्ष्यं तद्नतनाडीतुल्यमेवेष्टकालं प्रकल्प्यसूर्यात्क्र-
मलग्नं साध्यन्तद्मध्यलग्नम्भवति । यथा । सूर्योदयेसूर्यतुल्यमु-
दयलग्नं सूर्योदयादिष्टघटीषुक्रमेणोदयलग्नं साध्यतेतथाचापि ।
सूर्योदयात्पूर्वंयथोत्क्रमेणलग्नं साध्यते तथैवेहापि मध्यान्हात्पू-
र्वं पूर्वनतनाडीतुल्यमेवाभीष्टकालं प्रकल्प्य सूर्यादुत्क्रमेण लग्नं
साध्यन्तद्मध्यलग्नं स्यात्। अतःसिद्धमेतत्पूर्वनतेसूर्याद्विलोमल-
ग्नं साध्यम्पश्चिमनतेतुसूर्यात्क्रमलग्नं स्यादिति । अतएवोक्तंव-
सिष्ठसिद्धान्ते। लङ्कोदयैर्लग्नमृणाद्विलोमङ्खमध्यजंपूर्वनतासुभि-
र्यत्। पश्चान्नतप्राणचयैर्धनाख्यन्तत् षड्भयुक्तञ्चरसातलाख्य-
म्। इति। एतत्षड्राशियुक्तञ्चतुर्थलग्नं स्यात् । ऊर्ध्वाधरया-
स्योत्तरवृत्तयोर्मध्येऽधःस्थैयापवृत्तस्यास्थितत्वात्। यद्वा। पूर्वोन्न-
तात्क्रमलग्नं पश्चिमान्नतादुत्क्रमलग्नं साध्यञ्चतुर्थलग्नं स्यात्। तत्षड्-
राशियुतम्मध्यलग्नम्भवति । स्पष्टलग्नसाधनार्थंपद्यद्वयम्। ता-
त्कालिकोऽर्कोऽयनभागयुक्तस्तत्कालभागैरुदयोहतस्खखाग्न्युद्धृत-
स्तंरविभुक्तकालस्पष्टीकृतात्पूर्वनताद्विशोध्य ॥ तत्पृष्ठतोगाम्यु-
दयांश्चशेषमशुद्धहृत् खाग्निगुणांलवाद्यम् । मेषाद्यशुद्धर्क्षमिते-
र्विशुद्धन्ततोऽयनांशोनमृणाख्यलग्नम् ॥ इति । तस्मात्पश्चिमन-

तेसति सूर्यात्पश्चिमनतमेवेष्टकालं प्रकल्प्य लङ्कोदयैः क्रमलग्नं साध्यम्मध्यलग्नं स्यादिति सिद्धम् । अतउपपन्नस्पष्टान्नतादित्यतोय लङ्कोदयकैस्तलग्नमिव तत्साध्यमिति । पूर्वनतं तु पूर्वनतमिष्टकालं प्रकल्प्य लङ्कोदयैः सूर्यादेव लग्नसाध्यत्वान्मध्यलग्नं भवतीति प्राप्ते परमकारुणिकेनाचार्येणाऽऽस्य लग्नसाधने भिन्नत्वभ्रमो माभूदिति प्रकारान्तरेणाऽऽस्य लग्नस्यानपेक्ष्यैव मध्यलग्नसाधनमरचि तद्यथा पूर्वोन्नतमिष्टकालं प्रकल्प्य सषड्भसूर्यात्क्रमलग्नमेव मध्यलग्नं स्यादिति । अत्रेयं युक्तिः । पूर्वकपाले मध्यलग्नं साध्यते । तत्र पूर्वकपालारम्भो मध्यरात्रे । तत्र सूर्यतुल्यमेव चतुर्थलग्नं मध्यलग्नं तु सषड्भसूर्यतुल्यं मध्यरात्रादग्रे यावती घटी तु मध्यलग्नमवगन्तव्यं ता एव पूर्वोन्नतघटिका इति बालोऽपि जानाति । अतः सषड्भसूर्यात्पूर्वोन्नतसञ्ज्ञकमिष्टकालत्वात्क्रमलग्नं मध्यलग्नं स्यादिति सिद्धम् । अत्र प्रतीत्यर्थमुदाहरणम् । काश्यां पलभापादोनषडङ्गुलमिता । ५ । ४५ । यदैतावांस्तात्कालिकोऽर्कः । १ । ५ । ५२ । ३७ । अयनचलनांशाः । १८ । १० । रात्रिमानम् । २६ । ५० । तदार्कोदयात्पूर्वमेकघटीमितेष्टकाले तात्कालिकार्कादानीतमिदं विलोममुदयलग्नं ० । २९ । ३३ । २० । अथवा सषड्भतात्कालिकार्कात् । २५ । ५० । एतद्घटीतुल्यमिष्टकालं प्रकल्प्य साधितमिदं क्रमेणोदयलग्नञ्च । ० । २९ । ३३ । २० । सममेव यथा भवति तथैवात्रापि केवलसूर्यात्पूर्वनतमितेष्टकाले साधितं क्रमलग्नं सषड्भसूर्यात्पूर्वोन्नतमितेष्टकाले साधितं क्रमलग्नं सममेवोपजायत इति मन्दानां प्रतीतिकृत्याद्या । अत उक्तं यत्पूर्वोन्नतषड्भयुताद्रवित, इत्याद्युपपन्नम् । अत्र नतात्कालेऽपनमभावात्साध्यसाधनं लग्नाच्चतुर्थभावसाधनं चोक्तं प्रोदाहरणेन । अथास्तलग्नाद्रविवह्निनाधित-

न्नादिनाभिस्ततएवलग्नम् । लङ्कोदयैस्तद्दशमाख्यं स्याद्गुणत्त-
थाराशिद्वनोत्थमथ ॥ उत्तानार्थमिदम् । अत्रोपपत्तिः । सू-
र्यास्तकालसूर्यतुल्यमस्तलग्नं भवति । ततो दशमलग्नं तूर्ध्वया-
म्योत्तरवृत्तसंस्थयाम्यगोलयोः किञ्चिदधिकोनाचिभान्तरे भवति
तयोरन्तरं सूर्यतुल्यस्तलग्नोत्थदिनधनाडीतुल्यम् । अतः सूर्य-
तुल्यास्तलग्नात्सूर्यतुल्याल्लग्नोत्पन्नदिनदलमिष्टकालं प्रकल्प्य-
यल्लग्नं साध्यते तद्दशमलग्नं सूर्यास्ते यथाभवति तद्वदेवेष्टका-
लेनास्तलग्नात्तदुत्पन्नदिनार्द्धेनयावल्लग्नं साध्यते तावत्दशमल-
ग्नं भवतीति सर्वं निरवद्यम् । तथा तेनैवप्रकारेणोदयलग्नाल्लग्नादि-
दनोत्पन्नमथ चतुर्थलग्नं स्यात् । अस्योपपत्तिः प्राग्वदेव । यद्येत-
ल्लाध्यं लङ्कोदयैः साध्यते तत्कारणमुच्यते । मेषादीलङ्काक्षिति-
जे याम्योत्तरसंस्थासैवमेषादावूर्ध्वयाम्योत्तरवृत्ते । तदन्तापि मेषा-
दिसम्बन्धान्तरं मेषान्तो लङ्कोदय प्रमाणेनैवलगतीत्यतो मध्यल-
ग्नानयने लङ्कोदया एवग्राह्याः । यद्वा । राशीनामसवस्त्रिविधाः
उदयासवोमध्यासवोऽस्तासवश्चेति । तत्रोदयासूनामस्तासूनां-
चयोगार्धंमध्यासवोभवितुमर्हन्ति । तेतुलङ्कोदयासुतुल्या एवा-
तोमध्यलग्नं लङ्कोदयैरेवसाध्यमित्युपपन्नम् । इदानीमवशिष्ट-
भावसाधनमाह ॥

**लंप्रोव्यस्तखभस्यभूयमहृतोयोव्यस्त-**
**नौद्विघ्न तोनघ्नौतेपिचसाङ्गभास्तनु-**
**सुखाःसन्धिर्द्वियोगार्द्धितः ।**

व्यस्तशब्द इति । विगतमस्तं सप्तमं यस्मादिति व्यस्तम् । तच्चतत्-
खभं च व्यस्तखभम् । खभं नाम मध्यलग्नम् । व्यस्तखभस्य व्यगोरा-

ष्ठ्यादिद्विष्ठः एकश्चतुर्थाएकेनहतःगुणितःअपरश्चयमाभ्यांद्वाभ्यां-
हतःसन्नवनीतव्यं योज्यःक्रमेणद्वितीयतृतीयभावौभवतः पुनःस-
एवत्र्यंशोद्वाभ्यांसकाशात्च्युतःशुद्धस्तृतीयद्विष्ठःएकश्चतुर्थाहतोऽप
रश्चयमहतःमन्वन्ध्योयोज्यः। तौक्रमात्पञ्चमषष्ठभावौभवेताम्।
तेऽनन्तरानीतास्त्र्यंशभावाःसाङ्कभाःराशिषट्कयुताःसन्तःपरे-
ष्टव्याःधर्मायव्ययभावाःस्युः। एवंतनुमुखात्तन्वादयोद्वादशभावा
सिध्यन्ति। एभिर्भावैःममशुभाशुभफलंचिन्त्यमित्यर्थः: अपि-
चशब्दावनुक्तसमुच्चयार्थौ। अत्रोपपत्तिः। लग्नचतुर्थान्तर्वर्ति-
क्रान्तिवृत्तस्य समभागस्त्रयोभागाद्वितीयादयस्त्रयोभावाः। एवंचतु-
र्थसप्तमान्तर्वर्तिनःपञ्चमादयोभावास्त्रयः। एवंसप्तमदशमान्तर्व-
र्तिनोऽष्टमादयस्त्रयोभावाः। दशमलग्नान्तर्वर्तिनएकादशाद्वि-
त्रयोभावाइति यथानुपातः यदित्रिभिर्भावैर्लग्नचतुर्थान्तरतुल्य-
मन्तरंलभ्यतेतदैकेनकिमितिलग्नचतुर्थान्तरं त्रिभक्तं क्रमादेक-
द्विगुणंलग्ने योजितंसत्द्वितीयतृतीयभावौभवतइतिसिद्धंसत्या-
चार्यैर्यावदेवलग्नचतुर्थान्तरंतावदेवसप्तमदशमान्तरमिति सप्तम-
दशमान्तरस्यैवत्र्यंशोभूयमहतोलग्ने योज्यइत्युक्तम्। अतउपपन्नं
त्र्यंशोऽयस्तत्रभस्यभूयमहतोयोज्यस्तनाविति ब्रूत्वानोचतुर्थसप्त-
मान्तरस्यत्र्यंशोभूयमहतश्चतुर्थेयोज्यःपञ्चमषष्ठभावौस्तइत्यत्रसप्त-
मदशमान्तरस्यैवत्र्यंशोद्विच्युतचतुर्थसप्तमान्तरस्यत्र्यंशोभवतीतिस
प्तमदशमान्तरस्यत्र्यंशोद्विच्युतएकद्विगुणश्चतुर्थेयोज्यःसुतरिपुभा
वौभवतइतिसम्यगुक्तंद्विच्युतोवस्याविति। नन्वत्रसप्तमदशमा-
न्तरत्र्यंशोद्विच्युतश्चतुर्थसप्तमान्तरत्र्यंशोभवतीतियदुक्तं तत्रकायु-
क्तिरितिचेत् शृणुचतुर्थसप्तमान्तरसप्तमदशमान्तरयोर्योगोराशिषट्कं
भवतिचतुर्थदशमान्तरेणषड्नामेवराशीनांस्थितत्वात्तयोस्त्र्यंशयो
द्वौ यद्यचतुर्थसप्तमान्तरेसप्तमदशमांतरे च किञ्चिदूनाधि ॥मव

-राशित्रयंभवतियथास्वदेशे प्रथमं तथा द्वितीयं राशिषट्कं त्रिंश
द्घटीभिः समुदेति। परं पञ्च दश नाडीभोगराशित्रयं नोदेति
तद्दलापि। यद्यपि चतुर्थदशमान्तरे राशिषट्कमास्ते तथा
पि चतुर्थसप्तमान्तरे सप्तमदशमान्तरे च राशित्रयंनास्ति।
अत्रेदमवगन्तव्यम्। यदिचतुर्थसप्तमान्तरंराशित्रयादूनंतदा
सप्तमदशमान्तरंराशित्रयाधिकमेवस्यात्। एवंतदाधिक्येतस्य
न्यूनता। अथतस्यलब्ध्यंशोऽपिकिंचिदूनाधिकरूपंलब्ध्यंशद्वययोगोद्भवम्।
अतः सप्तमदशमान्तरलब्ध्यं शोद्विच्य, तच्चतुर्थसप्तमान्तरलब्ध्यंशः
स्यात्। एवं चतुर्थसप्तमान्तरलब्ध्यं शोद्विच्य, तः सप्तमदशमान्तर
लब्ध्यंशोभवतीत्यतोयुक्तियुक्तंनिरुक्तंद्विच्य, तद्भूति। अथसप्तमदश
मान्तरलब्ध्यंशोभूयसहतोजायाभावेयोज्यः क्रमान्मृत्युधर्मभावौभव
तद्वल्लब्ध्यंजायाभावस्यलग्नात्षड्राश्यन्तरितत्वाल्लग्नएवयोजितोध-
नसहजभावौजातौ। अथतौएवषड्युतौतौमृत्युधर्मभावौस्तः।
एवंदशमलग्नान्तरलब्ध्यंशएकद्विगुणोदशमेयोज्योलाभव्ययभावौ-
स्तद्वल्लब्धदशमस्यचतुर्थात्षड्राश्यन्तरितत्वात्चतुर्थएवयोजितः
पञ्चम षष्ठभावौ जातौ अथतौ एव षड्भयुतौ चायव्ययभावौ-
स्तताम्। अतउपपन्नंसाङ्गभाइति। यत्तुकेनचिदुक्तंभावसाध
नमार्षशास्त्रादनभिहितत्वात्निर्मूलमितितत्तुच्छम्। यतःप
राशरहोरायाम्। लग्नंसुखात्सुखंकामात्कामंखात्खंचलग्न
तः। लब्धंभमेकद्विगुणिततंयुञ्ज्यात्लग्नादिषुक्रमात्। पूर्वापर-
युतेरर्द्धंसंधिःस्याद्भावयोर्द्वयोः। एवंद्वादशभावाःस्युर्भवन्तिहि-
भसंधयइति। अथसंधिसाधनमाह। संधिर्द्वयोर्योगार्द्धितः। द्वयो
र्भावयोर्योगोऽर्द्धितोद्व्याप्तःसन्संधिर्भवेत्। अत्रभावद्वययोगकर
णेचक्रार्धाधिकतायांचक्रंत्याज्यम्। तथाप्रथमभावेदशैकाद-
शवाराशयोऽग्रिमभावेशून्यमेकोवाराशिः। तदाशून्यैकस्थाने-

द्वादशराशयोऽश्विन्याद्या असौ संधिर्द्विविधः । आरम्भविरामभेदात् । तथाहि । लग्नद्वितीययोर्योगार्धं लग्नस्य विरामसंधि स एव द्वितीयस्य आरम्भसंधिः । एवं सर्वेषामपि । इदमत्रावधेयम् । आरम्भसंधेरूनो ग्रहो गतभावजातं फलं करोति । विरामसंधेरधिकोऽग्रिमभावजातं फलं करोति । आरम्भसंधेरनल्पो विरामसंधेरल्पो ग्रहस्तु स्वाधिष्ठितभावजं फलं करोति । तथा च आहुः । आरम्भसंधेर्यदि चेदतो यदूनः फलं दद्यात्यादिमभावजातम् । विरामसंधेरधिकस्तदानीमागामिभावोत्थफलप्रदः स्यादिति । अत्र वासनाश्रीपतिपद्धतिटीकायां सुन्दरमिश्रैर्क्लदिनासैवोच्यते 'राशेः शकलानि कलात्मकलग्नस्य चरमविकलारूपमेव नितान्तसूक्ष्मरेखाकारकान्तिवृत्तस्थलं नितान्तसूक्ष्मरेखाकारोदितिजलग्नस्थवर्तीति चरमविकलैव प्रतीतं लग्नम् । एवमधस्तनरेखाकारसूक्ष्मयास्योत्तरवृत्तलग्नत्वात् चरमांशलैव चतुर्थं लग्नम् । तास्य तुल्यादितत्वाद् द्वितीयभावोऽपि चरमविकलैव । एवमन्येऽपि भावाश्चरमविकलात्मका एव । चरमविकलातः प्राक्परत्र पुनः सांनिध्यात् लग्नछायालग्नादिपदप्रयोगो गौणः सांनिध्यं तु युक्तसाम्यात् पूर्वभावस्य यावत् पर्यन्तमग्रे तदग्रिमस्य पश्चादपि तावत्पर्यन्तमेव स्वीकरणीयमिति द्वादशप्रथमभावयोगार्धात्मकसन्धिपर्यन्तं लग्नचरमविकलायाः पश्चात्सांनिध्यं लग्नद्वितीययोगार्धात्मकसंधिपर्यन्तं पुनरग्रे सांनिध्यमतः पूर्वसन्धिमारभ्याग्रिमसन्धिपर्यन्तं लग्नव्यवहारः । एवं द्वितीयादिभावव्यवहारोऽपि । इह भावस्य चरमविकलास्थोऽयहो भावस्य राश्यंशकलाविकलाभिः सम इति यावत्प्राधान्येन ।

तस्मिन् भावे मुख्यो वर्तत इति तद्भावोक्तसमग्रफलदः । भावस्य चरमविकलातो विकलामात्र न्यूनाधिक्ये समग्रफलस्य नाशी-बाधितोऽनेनापि क्रमेण पूर्वभावसमाप्ति स्थलमग्निमभावफ-

लारम्भस्थलमेकंसन्धिरूपमेवसिद्धम्। तद्भावसमारम्भाद्यग्रिमसन्धि-
पर्यन्तंपूर्वभावफलस्यक्रमेणापचयः। तथापूर्वसन्धिसमारम्भाद्य-
भावपर्यन्तमग्रिमभावफलस्यक्रमेणोपचयः। सन्धौतुप्रथमभा-
वस्यसमाप्तत्वादग्रिमभावस्यानारम्भान्निष्फलोग्रहः सन्धेरू-
नेग्रहेतुपूर्वभावफलस्यासमाप्तत्वात्पूर्वभावफलम्। सन्धेरधि-
केऽग्रिमस्यारम्भादग्रिमभावफलमितिसर्वंशोभनम्। प्रथमभा-
वचतुष्टयेसन्धित्रये च सिद्धसुगमोपायेनाग्रभावसन्धिसाधनंमि-
श्रोक्तपद्धतौ। त्रिद्विभावोक्रमाद्युक्तौद्वाभ्यांवेदैःसुतद्विषौ॥ ल-
ग्नादिभावाःषट्षड्भयुक्ताःसप्तमकादयः॥ १॥ त्रिद्व्येकमब्ध-
यस्त्वेकतोषुराशियुताःक्रमात्॥ सन्धयःस्युश्चतुर्थाद्याः सप्तभा-
षडसापरे॥ २ सुतरिपुभावसाधनंनामनामन्दावबोधार्थं व्य-
क्तक्रिययोच्यते। तत्रलग्नचतुर्थान्तरल्यंशद्वयलग्नयोगेतृतीयभा-
वोयंखण्डद्वयात्मकोवृत्तः॥ ल० च० अं० २ ल० यो० १।
३
चतुर्थसप्तमान्तरैकल्यंशचतुर्थभावयोगेजातः पञ्चमोयम्। च०
स० अं० १ च० यो० १। अनयोरन्तरंतृतीयभावेयावद्योज्य-
३
तेतावत्पञ्चमभावोभवतीत्यज्ञोपिजानाति। अतस्तयोरन्तरंसा-
ध्यते। तत्रसंशोध्यमानंसम्पूर्णत्वमतीत्यादिनातृतीयभावः ख-
ण्डद्वयात्मकः स्वगणगतोजातः। अथलग्ने चतुर्थाद्विशोधितेलग्नच-
तुर्थान्तरमेवजातम्। अस्माल्लग्नचतुर्थान्तरस्यल्यंशद्वयेऽपनीतेए-
कएवल्यंशोवशिष्यते। तत्रचतुर्थसप्तमान्तरल्यंशेशोजितेद्वयसे-
वस्यात्। यतउक्तंप्राक्ल्यंशद्वयोगोद्वयमिति। अतोद्वययुतस्तृ-
तीयः पञ्चमः स्यादित्युपपन्नम्। एवमेवरिपुभावोपपत्तिरूह्या।
शेषोपपत्तिसुगमाबालावबोधाच। अथ भावफला भावं भाव-
स्थानेभावफलसाधनंचवृत्तोत्तरार्द्धेनाह॥

शून्यं सन्धिषु भावगेऽखिलफलं स्याद्भाव सन्ध्यन्तरेणाप्तं सन्धिखगान्तरं त्वयच- यं भावाधिकेऽल्पेखगे ॥ ३ ॥

सन्धिषुस्थिते ग्रहे शून्यफलं स्यात् । भावगेभावांशादितुल्ये- खगेऽखिलफलं स्यात् । अखिलं सम्पूर्णं रूपमितमितियावत् । यतो नसर्वत्रहोरिकैः संपूर्णतादोतकं रूपमेव कल्पितम् । भावा- द्धिके खगेसति सन्धिखगान्तरं भाव सन्ध्यन्तरेणाप्तं भक्तं सत्त्वय- मवरोहाख्यं फलं स्यात् । भावासतिल्पेखगेसन्धिखगान्तरंभावस- न्ध्यन्तरेणाप्तं सच्चयमारोहाख्यम्फलं स्यात् । अयमत्राभिसन्धिः । भावादल्पग्रहे आरम्भसन्धिभावान्तरेणभक्तं सद्ग्रहभावफलं स्यात् । एवंभावादधिके विरामसन्धिग्रहान्तरंविरामसन्धि भावान्तरेण- भक्तं सद्भावफलं स्यादिति । अत्रोपपत्तिः । आरम्भसन्धिसमेग्रहे- फलस्यारम्भस्ततः क्रमेणोपचयः । भावसमेसमग्र फलंरूपमितं ततःक्रमेणापचयः । विरामसन्धिसमेतु फलनाशः । तदुक्तंश्री- पतिभिः ॥ भावप्रवृत्तौहिफलप्रवृत्तिःपूर्णंफलंभावसमांशकेषु ॥ ह्रासःक्रमाद्भावविरामकाले फलस्यनाशःकथितोमुनीन्द्रैरिति ॥ भावसमेग्रहेफलस्य परमत्वसन्धिखगान्तरमपि परमम्भावसन्ध्य- न्तरतुल्यम् । सन्धितुल्येग्रहेफलाभावः सन्धिखगान्तराभावस्त- तस्मात्सिद्धमेतत् । सन्धिखगान्तरपरमत्वे फलपरमत्वं सन्धिख- गान्तराभावे फलाभावइति । अथानुपातः । यदिभावसन्ध्यन्त- रतुल्येनग्रहसन्ध्यन्तरेण रूपंफलं लभ्यते तदेष्टसन्धिखगान्तरेण कि- मिति । सन्धिखगान्तरस्य रूपंगुणस्तस्याविकृतत्वान्नाशः । भा- वसन्ध्यन्तरंहरः । अतःसन्धिखगान्तरंभावसन्ध्यन्तरेणभक्तम्भाव-

फलंभवतीतिसिद्धम् अतउपपन्नंभावसन्ध्यन्तरेणान्नमित्यादि । अत्रेदंतत्त्वम् । यदिग्रहोभावादूनस्तदारम्भसन्धिर्ग्रहाद्भावाच्चविशोध्यः । यद्यधिकस्तदाग्रहोभावस्यविरामसन्धेःशोध्यः । ततउक्तवत्फलंसाध्यम् । यद्यत्रशोध्यंनशुद्ध्येत् तदाशोधकेद्वादशराशयोऽधिकायाह्याइत्यनुक्तमपिबुद्धिमताज्ञायते । फलस्यचयचयत्ववासनाप्रतिपादितप्रमेयासुगमाच । अत्रविशयद्वैधादनुपातद्वयंकृतंसुन्दरमिश्रैस्तदेकेनैवानुपातेनभावफलंसाधयताभगवताचार्येणनाहृतंगौरवात् । ऋजुमार्गेणसिद्ध्यतोऽर्थस्यवक्रेणसाधनायोगादितिन्यायाच्च । केचित्तुग्रहेभ्योपिभावसाधनंकुर्वतेतत्प्रासाणिकैःश्रीनीलकण्ठश्रीधरश्रीपतिभिरनुक्तत्वादयुक्तत्वाच्चनादरणीयम् किंच । ग्रहभावानीलकरागदीनायद्यभिमताभवेयुस्तदा दृष्टिसाधनंभावैरेवकृतंस्यान्नतुवक्ष्यमाणप्रकारेण । यतोजातके स्थाननियमेनदृष्टिरुक्तास्ति । अपिच । लग्नदशाप्राथम्येलग्नाद्भावाःसन्तीतिभावफलगुम्फितानिग्रहबलानिदशाक्रमबलानि-- स्वीकृतानि । एवंग्रहभावस्वीकारेरवीन्द्वोर्दशाप्राथम्येलग्नदशा प्राथम्यदूवैतद्भाव फलघ्नग्रह बलानिदशाक्रमबलानिस्युस्तथा सतिवक्ष्यमाण प्रकारेणखगोदयबलाङ्घ्रिरित्यनेनदशाक्रमवीर्यसाधनमुच्छिद्येत तस्माद्ग्रहेभ्योभावसाधनंनैवकार्यमितिसिद्धान्तः एवंग्रहभावाभावेसिद्धेतत्कालमित्रामित्रादिमुथानफादियोगसूर्यचन्द्रकेन्द्राविचारोग्रहास्थानाधीनोव्यावहारिकमेषवृषादिसंज्ञराशिवशेनैव । लग्नात्तुकेन्द्रादिस्थानंद्विविधम् । मेषादिराशिरूपंभावरूपंचेति तथासतियत्रप्राचामाचार्याणांराशिपर्यायपदपर्यन्तधावनंव्ययभवनादित्यादौ तत्रमेषादिराशिरूपाणिव्ययादिस्थानानिग्राह्याणि । यत्रतुदशान्तदंशादौनराशिपर्यायपदोपा-

दानंतत्त्रभावरूपाराये वस्थानानियाह्याणीतिसंक्षेपः । इदानी-
मध्यायसमाप्तिगद्येनाह ॥

## इतिकेशवपद्धतौभावाध्यायइति ॥

इतिसमाप्तः । इतिहेतुप्रकरणप्रकर्षादिसमाप्तिष्वित्यमरः । स-
वासनायासमक्तारिवृत्तिर्दिवाकरेणामलकेशवोक्तेः पितृव्यसंप्रा-
प्तधियादिभोत्रभावाधिकारःसमगात्समाप्तिम् । इतिश्रीगणादै
वज्ञात्मजनृसिंहस्यसुतेनदिवाकरेणविरचितायांकेशवोक्तजातकक
र्मपद्धतिष्टीकायांसवासनायांप्रौढमनोरमाभिधायांभावाध्यायः-
प्रथमः ॥ १ ॥ भावाध्यायस्यभावार्थव्याख्यायगणकोत्तमः । दि
वाकरोऽथदृष्टाख्यंव्याख्यातिविमलोक्तिभिः ॥ १ ॥ तत्रदृष्टिसा
धनाध्यायंवृत्तत्रैकेनाह ॥

खेकाग्निष्विषवेदरामयमभूखाम्राभ्र
मेकादिभेद्दृष्टावर्जितदृश्यकस्यगुरुणा
वेदष्टवेदैक्तताः ॥ सव्देनाङ्कयमेसृजा
नगगुणेष्वाभादिजाःसंस्कताभागघ्न
चयहृत्इषानलत्रि०लवैनाब्ध्युद्दृष्ट
ताद्भवत् ॥ ४ ॥

द्रष्ट्टवर्जितदृश्यकस्यैकादिभेएकादिराशिषुखैकाग्नीत्यादयोङ्काः
स्युः । तत्रैकभेऽङ्कःखंशून्यम् । द्विभेएकः । त्रिभेअग्नयस्त्रयः । च
तुर्भेद्वौ । पञ्चभेखम् । षष्ठेवेदाःचत्वारः । सप्तमेरामाःत्रयः । अ
ष्टमेयमौद्वौ । नवमेभूःएकः । दशमेखम् । एकादशमेअभ्रंशून्य-

म् । द्वादशभे सप्ताङ्कं शून्यम् । स्वाङ्काभमित्यत्र समाहारैकवद्भावः पश्य-
तीति द्रष्टा । तेन द्रष्टा दर्शनार्हो दृश्यः । दृश्य एव दृश्यकः । द्रष्टृवर्जि-
तदृश्यकस्यैकादिभे एतेऽङ्काः स्युः । एकादिभ इत्युक्ते किमेते राश्या-
दौ राशिमध्ये राश्यन्ते वाङ्काः स्युरिति संशयः स्यात्तन्निरासार्थमाह ।
भादिजादिति । द्वितीयादिराश्यादिज इत्यादि बोध्यम् । गुर्वा-
दीनां विशेषमाह । चेदिति । चेद्गुरुणा द्रष्टृवर्जितदृश्यकस्य षष्ठे वेदे
भे षष्ठभे चतुर्भे वक्रतास्थत्वारोङ्काः स्यु,र्न तदा पूर्वोक्ता इत्यध्याहारः ।
मन्देन शनैश्चरेण द्रष्टृवर्जितदृश्यस्याङ्कयमेभे नवभे द्विभे वक्रतास्थरो-
ङ्काः स्यु,र्नतु पूर्वोक्ताः । अस्तजाभौमेन द्रष्टृवर्जितदृश्यस्य नगगुणे-
भे सप्तभे त्रिभे वक्रतास्थत्वारोङ्काः स्यु,र्न पूर्वोक्ताः । एवं राश्यादावङ्कानु-
क्त्वा राश्यवयवानामङ्कसाधनं वशिष्ठवाद्वारेणाह । किंविशिष्टा
अङ्काः । भागघ्ना अयवद्विखानलनवेन संस्कृताः । एतदुक्तं भवति ।
राश्यादिजो योऽङ्कः सोऽग्रिमाङ्काच्चकुदस्तद्वाद्वियद्वाग्रिमाङ्को रा-
श्यादिजाङ्काच्छुद्धस्तद्वाद्येनयोस्तौ इति विदितव्यम् । तेन चाद्येन द्वद्ग्रा
वा गुणिता ये राश्यवयवस्य भागास्ते चांशता भाज्याः । लब्धेन तेङ्का-
संस्कार्याः । कथम् । चयेहीना वद्वीयुक्ता इति । ततोऽभ्याहृताश्च
तुर्भक्ताः सन्तो दृश्यभेत् । अत्रेदमवधेयम् । गुरुणा द्रष्टृवर्जितदृश्य
स्य रत्नमरागौ नवमराशौ च राश्यादिजोऽङ्कः पूर्वोक्तो द्विमितो न ग्रा-
ह्यः किन्तु चत्वारः । एवं क्रमशः शून्यकाभ्यां सहान्तरं विधायोक्त--
दिशा दृष्टिः साध्या यदा तु गुरुणा द्रष्टृवर्जितदृश्यस्य त्रिमितं शेषं त--
दा राश्यादिजोऽङ्कस्त्रिमितो ग्राह्योन्तरं चतुर्भिः साकं कार्यं न द्वाभ्या-
मिति । एवं सप्तमितशेषेऽङ्कस्त्रिमितो ग्राह्योन्तरं चतुर्भिः सह विधे-
यं न द्वाभ्यामिति । एवं शनिभौमयोरपि बोध्यम् । एवं द्वादशभावा
नामप्युपरिभावान्दृश्यान्यहान्द्रष्टृनप्रकल्प्य ग्रहाणां दृशोऽनेनैव प्र
कारेण साध्याः । अत्रोपपत्तिः । बृहज्जातके । त्रिदशत्रिकोणच

तुरस्रसप्तमान्यवलोकयन्तिचरणाभिवृद्धितः। रविजामरेज्यकधि
राःपरेचयेक्रमशोभवन्तिखलुवीक्षणेऽधिकाइति। परेरविचन्द्र-
बुधभृगुभ्यःशुक्रारादृविजादीनांसमुच्चयस्ततःपरेचेत्यस्यसमस्तावृत्त्य
र्थः। परेचेत्युपादानंतुक्रमप्रतिपादनार्थंवीक्षणेऽधिकाइतिवाक्य
खण्डस्यसंपूर्णदृष्ट्याद्रष्टारइत्यर्थंप्रकटयितुंचतृतीयदशमौशनिर्नव
मपञ्चमंगुरुश्चतुर्थाष्टमंभौमःसप्तमंसर्वेसंपूर्णदृष्ट्यापश्यन्ति। तृती
ये। आद्यौमध्येऽन्तेचसर्वत्रपादमितादृष्टिर्नोचिता। कुत्रचिदेव-
चोचिता। तद्यावतिमेषवृषादिभागेऽवस्थितस्य ग्रहस्य तृतीये-
तावत्येवभागेस्थितेग्रहेद्विराश्यन्तरउत्सर्गसिद्ध साम्यलक्षणयुक्तेः
सत्त्वात्तृतीयस्यमेषवृषादि संज्ञव्यावहारिकराशित्वस्याभावाच्च
पादमितादृष्टिर्न्याय्या। तथा नवराश्यन्तरेपि। एवंद्रष्टृग्रहाच्च-
तुरष्टराश्यन्तरे द्विपादमितादृष्टिः। त्रिसप्तमान्तरेत्रिपादमिता
दृष्टिः। षड्भान्तरे संपूर्णाचतुःपादमितादृष्टिः। शेषेषु दशरा
श्यन्तरादिषु अनुक्तत्वाद्दृष्ट्यभावइतिसिद्धम्। एवंद्रष्टुरेकादिरा

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| ० | १ | ३ | २ | ० | ४ | ३ | २ | १ | ० | ० | ० |

श्यन्तरेदृश्येसतिसिद्धादृष्टिपादालिख्यन्ते। एतदुपपन्नंखैकाब्धि
द्विखवेदरामयमभूखाब्ध्यभ्रमेकादिभइति। अथदृक्साधनोपप-
त्तिः। द्रष्टुर्येनयादृश्यः कियतान्तरेणाग्रतोऽस्तीति ज्ञानार्थंदृश्यो
द्रष्टावर्जितः क्रियते। द्रष्टावर्जितदृश्यस्य यावत्संख्योराशिस्तद-
धोयोयोऽङ्कः सग्राह्यः। ततोराश्यवः स्वांशानां दृक्साधनाया-
नुपातः। यदित्रिंशदंशगतैष्याङ्कान्तरतुल्यावृद्धिः तदोंशालब्ध-
सेतदाद्येषांशैः किमिति। लब्धवृद्धिगुणिताभागास्त्रिंशताभाज्याः
फलेनगताङ्कः क्षयेहीनोवृद्धौयुक्तः कार्यः। अतः सुष्ठूक्तं भागघ्न-

त्र्ययनदिग्बाणलवेनसंस्कृतादिति । एवंरूपचरणात्मिकादृष्टिर्भवति । चतुर्भिश्चरणैरूपमिति चतुर्भक्तारूपादिका स्यात् इत्युपपन्नम् । अथविशेषदृगुपपत्तिः । गुरोश्चतुरष्टराश्यन्तरेशनेर्द्विनवराश्यन्तरेकुजस्य त्रिसप्तराश्यन्तरे सम्पूर्णांचतुश्चरणात्मिकादृष्टिरतस्तद्राश्यन्तरेतेषामङ्कश्चत्वारोग्राह्या इत्युपपन्नम् । प्रोक्तराश्यधिकान्तरेतुसंपूर्णदृष्टेरपचयादग्रिमाङ्केनमध्यान्तरं कृत्वादृष्टिःसाध्येत्युपयुक्तं अथगुरोस्त्रिसप्तान्तरेत्रिपादमितादृष्टिश्चतुरष्टभान्तरेचतुःपादमितामध्येतुपादत्रयाधिकापादचतुष्टयादूनादृष्टिरुचिता । अतश्चतुर्भिःसार्कमन्तरं कार्यं नद्वाभ्यामेवंशनिभौमयोरपीतिसर्वं निरवद्यम् । एतद्दृष्टिमानमतिलघुक्रिययोक्तम्पराशरहोरायाम् । दृश्याद्विशोध्यद्रष्टारं षड्राशिभ्योऽधिकं भवेत् । दिग्भ्योविशोध्यद्वाभ्यां तुभागीकृत्यचदृष्टयः ॥ १ ॥ पञ्चाधिकेविनाराशिंभागाद्विघ्नाश्चदृष्टयः । वेदाधिकेत्यजेन्नूतान्भागान्दृष्टिस्त्रिभाधिके ॥ २ ॥-ऽविशोध्ययुगतोद्वाभ्यांलब्धंखाग्नियुतंभवेत् । कराधिकेविनाराशिंभागास्तिथियुतांस्तथा ॥ ३ ॥ रूपाधिकेविनाराशिभागाद्वाभ्यांविभाजितादिति । अत्रविशेषदृक्साधनार्थंश्लोकाः । भागाद्विनिघ्ना विधुभेन्तरालेत्रिंशद्युतांश्चागजभेकुजस्य । दृष्टिर्भवेद्भागदलोनषष्टिर्द्विभेङ्कभेद्विघ्नलवोनषष्टिः ॥ १ ॥ त्रिभेद्विभेभागार्द्धयुतेषुवेदाःपश्येतजीवेनविहीनदृश्ये । द्विघ्नांशकोनायुगभेतुषष्टिःसार्द्धांशकोनागजभेपिषष्टिः । २ । त्रिभेऽद्रिभेभागविहीनषष्टिर्दृष्टिप्रणीताधरणीसुतस्य । पञ्चावनीसंयुतसार्द्धभागाद्विभेङ्गभेषष्टिकलोन्मितैव ॥ ३ ॥

स्पष्टार्थाःसर्वेपिपरमनेनप्रकारेणषष्ट्यंशात्मिकादृष्टिःस्यात्षष्टिभक्तासतीरूपादिकास्यादितिबोद्धव्यम् । वासनात्रश्रीपतिकृतदृष्टिसाधनवासनावज्ज्ञेयास्पष्टत्वाद्ग्रन्थवाहुल्यभयाच्चनमयालिख्य । तेयतुकेनचित्प्रलपितंबृहज्जातकेवीक्षणेऽधिकाइत्युक्तेःरविजादौ

नांत्रिदशादिस्थानेऽन्यग्रहापेक्षयावीक्षणेऽप्याधिक्याभावं नतु सं-
पूर्णत्वं तथासति पद्धत्युक्तं विशेषदृगानयनमसङ्गतमार्षग्रन्थानुक्त-
त्वादिति । तच्चिन्त्यम् । पराशरजातके विशेषदृगानयनस्योक्त-
त्वात् । तथाच पराशरवाक्यम् । शरवेदाः स्वरामाश्च तिथयो योजि
ताः क्रमात् । शनिदेवेज्यधौमानामेवं दृष्टिः स्फुटा भवेत् । सा-
रावल्यामपि । पूर्णं पश्यति रविजस्तृतीयदशमे त्र्यादि । बृहज्जा
तकटीकायामुत्पलव्याख्यानं च दृशं तृतीयदशमस्थितान्ग्रहराशी
ञ्शनैश्चरः पश्यन्नन्यग्रहेभ्योऽधिकफलप्रदो भवति परिपूर्णं पश्यतीत्य
र्थ इति । तस्माद्विशेषदृक्साधनमार्षमूलकमिति सर्वमवदातम् ।
सत्रामनायासभकारिवृत्तिर्दिवाकरेणामलकेशवोक्तेः । पितृव्य-
संप्राप्तधिया खगानां दृक्साधनं तत्समाप्तिमागात् २ इति श्रीकृष्ण
दैवज्ञात्मज नृसिंहगणकस्य सुतेन दिवाकरेण विरचितायां केशवी-
क्तजातककर्मपद्धतेष्टीकायां सत्रामनोयाप्रौढमनोरमाभिधायां दृ-
ष्टिसाधनाध्यायो द्वितीयः ॥ २ ॥ श्रीमच्छिवाख्यस्य मतानुसारं-
प्राचां कृतिभ्यः परिगृह्य सारम् । खेचारिवीर्यानयनाधिकारं दिवा
कराख्यो विवरीवरीति ॥ १ ॥ अथ बलसाधनाध्यायो व्याख्यायते ।
तत्र बलं द्विविधं ग्रहबलं भावबलं चेति । आद्यं स्थानदिक्कालनिस-
र्गचेष्टादृग्भेदैः षड्विधम् । तत्रापि स्थानबलं पञ्चधा दिग्बलमेक-
धा कालबलं चतुर्धा निसर्गबलमेकधा चेष्टाबलं त्रिधा दृग्बलमेकधैव-
मेवं पञ्चदशधा ग्रहबलम् । द्वितीयं त्रिविधं स्वामिबलदिग्बलभे-
दात् । तत्र तावद्ग्रहबलं विवक्षुः स्थानबलभेदेषूच्चबलमाह ॥

## नीचोनोभगणात्च्युतःषडधिकश्चेत्षड्घ्नदोच्चंबलम् ॥

नीचेनोनोऽर्थाद्ग्रहश्चेत्षडधिकस्तर्हि भगणाद्द्वादशराशिभ्यः च्युतः शुद्धः चेत्षड्राश्यल्पस्तदा यथास्थित एवेत्यर्थतः सिद्धम् । षड्घ्नत्षड्गुणः सन्उच्चात्तत्संबन्धि नोच्चंबलम् । उच्चबलंरूपादिकं स्यादित्यर्थः । अत्रायमभिसंधिः । यदिनीचोनग्रहस्य संपूर्णाः षड्राशयः स्युस्तदा ते षड्गुणिताः पूर्णरूपमितं बलं स्यात् । यदि षडल्पास्तदा प्रथमरूपस्थाने शून्यं ग्राह्यम् । तद्राश्यादिं षष्ट्या गुण्यतत्तो विकलास्थानात्प्रतीपं स्वस्वहारेण लब्धमुपर्युपरि संयोज्य यदूर्ध्वस्थानं भवति तत्पुनः षड्भिर्भाज्यम् । लब्धं शून्याधः षष्ट्यंशा ज्ञेयाः शेषं राश्यादिस्थानीयं पुनः षष्ट्या संगुण्य प्राग्वत्कृते यदूर्ध्वस्थाने निष्पद्यते तदपि षड्भिर्भज्यं लब्धं तदधो द्विषष्ट्यंशाः । एवं द्विष्ठं रूपाद्युच्चबलं भवति । यद्वा प्रथमरूपस्थाने शून्यं ग्राह्यं ततो राश्यंशान् षष्ट्या संगुण्य तत्र द्विगुणानंशान् संयोज्य षड्भिर्भागे हृते लब्धं षष्ट्यंशाः स्युः । पुनर्यच्छेषं तत्षष्ट्या संगुण्य तत्र द्विगुणाः कलाः प्रक्षिप्य षड्भिर्भक्ते द्विषष्ट्यंशास्युरेवमग्रेऽपि । यद्वा । नीचग्रहान्तरस्य षड्राश्यल्पस्य राश्यंशः षष्ट्यंशाद्युच्चबलं स्यात् । तत्षष्टिभक्तं रूपादिकमपि स्यादिति सुगमप्रकारोयम् उच्चनीचविभागः सारावल्याम् । सूर्यादीनामुच्चाः क्रियवृषमृगयुवतिकर्कमीनतुलाः । स्वोच्चेतु कथ्यभागा यथाक्रमेणैव परमोच्चाः ॥ १ ॥ दिग्वह्न्यष्टाविंशतितिथिबाणत्रिघनविंशतयः । स्वोच्चात्सप्तमराशिर्नीचः स्यात्तदंशकैः परमः ॥ २ ॥ अथोपपत्तिः । सारावलीवाक्यम् । स्वोच्चे स्थितः शुभफलं प्रकरोति पूर्णं नीचस्थितस्तु विफलमिति । अतोच्चस्थे ग्रहे फलपरमत्वाद्बलं परमं रूपमितं

तत्रनीचग्रहान्तरमपिपरमं षड्राशितुल्यं ततो नीचं यावदुपचयः नी
चेफलाभावःफलाभावा दलाभावः तत्रनीचग्रहान्तराभावस्ततत
उच्चं यावदुपचयः अतोनीचग्रहान्तरतएवोच्चबलंसाधयितुंयुज्यतेय
थानुपातः यदि षड्राशितुल्येन नीचग्रहान्तरेणरूपंबलं तदेष्टे न कि
मितिफलमुच्चबलंस्यात् अतःसम्यगुक्तं नीचोनःषड्भादितिपरमनी
चादग्रस्थेग्रहेग्रहेणोनंनीचंकार्यंनीचादग्रस्थेनीचोनोग्रहइति ।
अत्राचार्यैः सर्वदानीचेनैवोनोग्रहः कर्तव्यइत्युक्तंतथाकृतेऽउच्चा
दग्रस्थेग्रहेनीचग्रहान्तरमुपचीयते। बलंत्वपचीयते। उपचीयमा-
नादन्तरादपचीयमानंबलंसाधयितुंनयुज्यतइतिभगणाच्छुद्धइ-
त्युक्तम्। भगणाच्छोधितेनीचादर्वाचीनराश्यादिर्भविष्यति। एतत्
च्चादग्रस्थेप्रतिदिनमपचीयतइत्यस्मादपचीयमानंबलंसाध्यमिति
युक्तम्। अथषष्ट्यंशग्रहणोपपत्तिः। प्रथमं रूपस्थानेशून्यंगृहीतंस
त्यनन्तरंरूपस्यषष्ट्यंशाग्राह्याः। तत्रषष्ट्यंशानांषष्ट्याःरूपमितिशे
षंषष्टिगुणंकृत्वाषड्भक्तेषष्ट्यंशाः स्युरितियुक्तम्। एवंविषष्ट्यंशष
ष्ट्याषष्ट्यंशइतिशेषंपुनः षष्ट्यासंगुण्यषड्भिर्भक्तेविषष्ट्यंशाः स्युरि
त्यपिसाधु। अथद्वितीयप्रकारवासनाप्रथमप्रकारान्तर्भूतोदाहर
णमुररीकृत्योच्यते। तत्रनीचोनोग्रहोराश्यादिः। ६। २६।
। २६। असौषड्भक्तोलब्धंरूपस्थानेशून्यंशेषंषष्टिगुणितमिदम्।
। ३२। २६। २६। ०। अत्रराशिस्थानेषष्टिगुणराशिद्विगुणांशयो
गः। अंशस्थानेकलाः। कलास्थानेविकलाइतिजातम्। एत-
त्षड्भक्तंकार्यम्। अतोराशीन्षष्ट्यासंगुण्यतत्रद्विगुणानंशान्प्रक्षि
प्यषड्भिर्भक्ते लब्धंषष्ट्यंशाः स्युरितिसम्यगुक्तम्। पुनः शेषं। २
२६। ०। षष्टिगुणम् १७२। २६। इहराशिस्थानेषष्टिघ्नशेष-
कलायोगोंशस्थानेविकलाः। इयंषड्भिर्भाज्यम्। अतः सुष्ठूक्तं द्वि
गुणाः कलाः संयोज्येत्यादि। एवमग्रेपिद्रष्टव्यम्। अथोच्चबल-

स्य द्वितीयप्रकारेयुक्तिः। षड्राशितुल्ये नीचग्रहान्तरे बलं परमत्रि-
रूपमुक्तं तत्र षड्राश्यंशाः १८० अतस्त्रैराशिकम्। यदि खाष्टे-
न्दुमितैर्नीचग्रहान्तरभागैः षष्टिषष्ट्यंशात्मकस्यास्तदष्टैः किमित्य-
त्रगुणहरौगुणेनापवर्त्य प्राप्तं हरस्थाने त्रयम्। अत उत्पन्नं नीचग्रहा-
न्तरस्य षड्भाल्पस्यांशत्र्यंशः षष्ट्यंशाद्युच्चबलमिति। तथा च
पराशरहोरायाम्। नीचोनं तु ग्रहस्थानं षड्भाधिकं चक्राद्विशोधयेद्
भागीकृत्य त्रिभिर्भक्तं फलमुच्चबलं भवेदिति। इदानीं सप्तवर्गज-
बलमाह॥

स्वर्क्षे ध्रुवं समभेऽष्टमांशखचरस्यामूलत्रिको-
णे बलम्। मित्रर्क्षेऽङ्घ्रिरधीष्टभेऽथ-
द्व्यंशावैरिभेऽष्टांशकोऽन्त्यांशोऽध्यरि-
भे गृहादिषु वशात् खेटस्य सप्तैक्यजम् ५

अत्रायं गुरुसम्प्रदायः। प्रथमं गच्छन्दोसतावित्यादिना नि-
सर्गमित्रामित्रसमचक्रं लेख्यम्। ततोऽन्योन्यस्य धनव्ययायसहज-
व्यापारबन्धुस्थिताद् व्ययेन तात्कालिकामित्रामित्रचक्रं लेख्यम्।
ततोऽधिसुहृदमित्रादिभिः कल्पयेदिति अधिमित्रादिचक्रं लेख्य-
म्। ततः सप्तवर्गजबलज्ञानार्थं सप्तवर्गचक्रमधिमित्रमित्रसमवै-
र्यधिवैरिपञ्चकसप्तवर्गांशान्वितं लेख्यमिति। अथ व्याख्या। स्व-
स्वक्षेत्रे राशावर्थाद्ग्रहे सति अर्द्धं बलं स्यात्, समराशिस्थेऽष्टमांशो
बलं, मूलत्रिकोणराशिस्थे त्रयश्चरणाः, मित्रराशिस्थे चतुर्थांशः,
अधिमित्रभस्थे द्वयोष्टमांशः, शत्रुराशिस्थे षोडशांशः, अधिशत्रु-
राशिस्थे द्वात्रिंशद्भागो बलस्यादिति सर्वत्र सम्बन्धः। अत्रांशमांशा-

वांनखांशैर्मूलत्रिकोणमत्रनभितिशास्त्रविरुद्धं ब्रुवन्स्वाज्ञानमेवा
विश्चकार । तस्मात्सारावलीवाक्यानांप्रामाणिकत्वाङ्गीत्पत्ति-
नास्तिकज्ञानशठाकाय सुगाहृतत्वाच्चतेभ्यएवनिर्णयःकार्यः ।
गुणाकरस्यतुट्टीकाया वराहवाक्यस्ययथार्थाभिधायित्वात्तदुक्तम-
प्रमाणमेवेतिमन्तव्यम् । अतोच्चबलस्यपृथगेवानीतत्वादुच्चस्या-
नपेक्षितत्वान्मूलत्रिकोणस्वगृहनिर्णयस्यैवापेक्षितत्वाच्चसंपूर्णए-
वक्षपराशिरिन्दोस्त्रिकोणम् । किंचचन्द्रस्यवृषराशौप्रधानमेकं-
मूलत्रिकोणबलमेवग्राह्यंनतुमिश्रादि सम्बन्धवशादन्यदपीति-
वोध्यम् । बुधस्यतुकन्यायांविंशत्यंशास्त्रिकोणम् । परेदशांशाः
स्वगृहम् । यत्रतूच्चत्रिकोणस्वगृहाणांत्रयाणामप्यपेक्षातत्स्वोच्चरू
पमित्यादौयथोक्तैवव्यवस्था ॥ एवंस्थानादिभावगतानांग्रहाणांव
लमुक्त्वेदानींसप्तसुवर्गेषुतत्स्थानमथचतदैक्यंसप्तवर्गजबलस्याव
तोल्याह । गृहादिपवशादित्यादिना । खेटस्यगृहादिपवशाद्गृ
हनामादियोंशांतगृहादयःआदिशब्देनहोराद्रेष्काणादीनांसंग्रहः ।
गृहादन्पान्तितगृहादिपाः गृहादिसप्तवर्गस्वामिनस्तेषांबलात्-
स्वर्चेष्ठमित्यादौनिसप्तवर्गबलानिग्राह्याणि । तेषांसप्तानामैक्या
ज्जायतेतत्तथा । एवंविधस्वबलंसप्तवर्गजबलंस्यादित्यर्थः । एतदु-
क्तंभवति । यस्यग्रहस्यसप्तवर्गजबलंज्ञातुमिष्टं तस्यगृहादिस्वा-
मीनाधिमित्रादित्रययद्वर्तितदुक्तस्वबलंग्राह्यमिति । अत्रकश्चिदे
वंव्याचष्टे । ग्रहोयस्मिन्गृहेहोराद्रेष्काणादौवास्ततद्गृहस्वामीहोरादि-
स्वामीवाचेन्मूलत्रिकोणस्थितदाभिचरणांबलंस्वगृहेचेद्द्रसार्द्धमि-
त्यादि । तन्नश्रद्धेयम् । निखिलजातकग्रन्थविरोधात् । किञ्च
चगृहादिपवशादित्युक्तमर्थान्तरंविसदृशंभवति । परंप्राचीनग्रन्थैक्ये
नापि तथा नोक्तमिति भ्रान्त्यनवकाश इति मिश्रा ऊचुः ।
तथा च सारावली वाक्यम् । स्वोच्चस्थितः शुभफलं प्रकरोति

पूर्णं नीचार्कगन्तु त्रिफलं रिपु मन्दिरेऽल्पम् । पादं फलस्य हितभे स्वगृहे तथार्द्धं पादत्रयं गगनगः स्थितवांस्त्रिकोण इति अत्र स्वोच्चादिस्थानेषु स्थितवान्गगनगो ग्रहः संपूर्णादिशुभफलदाता नीच शत्रुगृहस्थोऽत्र रिपुस्थो ग्रहस्तामसीं संपूर्णादिफलं ददातीति तोक्तमेतस्य ह्रासादिर्भिन्नस्वभस्थे रूपार्द्धं बलमित्यादिव्याख्यानसमर्द्धमिति प्रतीमः पराशरजातकेऽपि मूलत्रिकोणस्वर्क्षाधिमित्रमित्रसमारिषु । वधिशत्रुगृहे चापि स्थितानां क्रमशो बलमिति । अत्रापि मूलत्रिकोणादिस्थितानां ग्रहाणां बलं स्यादितिनामभिहितमेव । पुनर्भवेदेवम् । त्रिकोणादौ स्वोच्चेऽभयत्रापि गगनगस्य संबन्धो हि निगमनात् विरहादुच्चबलमपि यदि नीचगृहत्वं मित्रगृहान्तरतः साधितं स्यात् उच्चबलं तथा न साधितमतः कौनवित्वं निश्चयमादाय व्याख्यातं तत्रसुधीभिरादरणीयम् । यत्तु केशवसांवत्सरैः स्वकृतटीकायामुक्तं ग्रहो यस्मिन्गृहे स्थितस्तद्गृहस्वामिनः स्वबलाद्युक्तबलं ग्राह्यमिति । तदपि सर्वप्राचीनग्रन्थाविरोधाद्यान्ययाऽक्रियते । ग्रहो यस्मिन्गृहे स्थितस्तद्गृहस्वामी चेत्स्वयमेव तदा रूपार्द्धं बलं तद्विशुद्धं तदा त्र्यंशभागांशत्यादिपदं होरान्तरापि । अथोपपत्तिः । बृहज्जातके । स्वोच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः । शुभं संपूर्णपादोनदलपादाल्पनिष्फलमिति । एवं फलनारतम्यनिर्णयात्फलनसदृशगतैर्नीचादिष्टबलेन अवितथ्यातः स्वोच्चे रूपं मूलत्रिकोणे त्रिचरणं स्वगृहेऽर्द्धं पादोनमित्रगृहे रिपुगृहेऽल्पं नीचे फलाभाव इति सिद्धं एवं तारतम्यवशादवशिष्टाधिमित्रमित्रशत्रुगृहाधिशत्रुगृहेषु फलं बलं न्याय्यं तद्वदधिमित्रगृहेऽसम्भवे । अधिमित्रगृहे स्वगृहापेक्षयान्यूनतामित्रगृहापेक्षयाऽऽधिक्यमिति प्रसिद्धम् । अतः स्वगृहाद्यावतो न्यूनतावर्य मित्रगृहादधिकतेति न्यूनत्वाधिकत्वमर्द्धव्यवस्थितम् । ततः

त्रिमित्रादीनांपतीनामुपात्तत्वाद्गृहादिपदवशादितिद्धम् । बृहज्जा
तके । स्वत्रिकोणनवांशैः । स्वस्यत्रिकोणं नवांशास्तैरित्यर्थः ।
पश्चात्स्वगृहेनाधिमित्रादयो नवांशपदेन होरादयश्च लक्षिताः ।
इतिसप्तवर्गबलोपपत्तिः सुन्दरमिश्रोदिता अथयुग्मायुग्मराशि
नवांशबलमाह ।

## शुक्रेन्दू समभांशके हि विषमेऽन्ये द्युर-
## ङ्घ्रिम्बलम् ॥

समभांशकेस्त्रीराशिनवांशके स्थितौ शुक्रेन्दू इति निश्चयेना-
ङ्घ्रिरूपचतुर्थांशं बलं दद्यातामु । भं चांशकश्च भांशकमित्यत्र द्वन्द्वैक
वद्भावः समं च तद्भांशकं च समभांशकं तस्मिन् अयमर्थः स्त्रीराशौ स्त्री
राशिनवांशे वा यदि शुक्रेन्दू भवतस्तदा रूपचतुर्थांशबलं यच्छतः स्त्री
राशौ स्त्रीराशिनवांशे चोभयोः स्थितौ भवतस्तदा पादद्वयं बलमित्या
र्थं न राजमहिमेवोल्लब्धम् अन्ये सूर्यभौमबुधगुरुशनयः विषमभा
शके पुंराशिनवांशे अङ्घ्रिबलं ददति पुरुषराशौ पुरुषराशिनवांशे वा
स्थिताः सूर्यादयः पादबलं ददुः । यदा तु पुंराशौ पुंराशिनवांशे च-
स्थिता भवन्ति तदा पादद्वयमित्यर्थः । अत्र विषमपदस्य पुमर्थोपल-
क्षकत्वं समपदस्य च स्त्र्यर्थोपलक्षकत्वम् अतो वृषस्य द्वितीयनवांशे स्थि-
तस्य सूर्यादेरन्यतमस्य द्वितीयनवांशस्य युग्मत्वात्पादबलं न स्याद्
इति भ्रमो निरस्तः । यतो द्वितीयनवांशः कुम्भस्येत्यस्य पुंभात्मकत्वमे
व । अतोपपत्तिः स्त्रीराशिषु स्त्रीग्रहाणां पुरुषराशिषु पुरुषग्रहाणां
बलाधिक्यं प्रसिद्धम् । तथा चात्र मेषाद्याः पुंस्त्र्याख्याः चरास्थिरद्विस्व
भावसंज्ञाश्चेत्यादिना समराशीनां स्त्रीत्वं विषमराशीनां पुरुषत्व-

युतम् । तथा बुधसूर्यसुतौ नपुंसकाख्यौ शशिशुक्रयुवती नरास्तु शेषा इति शशिशुक्रयोः स्त्रीग्रहत्वं चातस्तयोः समराश्युपलक्षितस्त्रीराशौ बलाधिक्यम् । तथैवेतरेषां पुरुषग्रहाणां विषमराश्युपलक्षिते पुरुषराशौ बलाधिकत्वम् । अत्र शनिबुधयोर्नपुंसकत्वेऽपि पुरुषाकृतित्वात्पुंग्रहेऽन्तर्भावः तथा च लघुजातके चन्द्रसितौ स्त्रौ द्वे च पुरुषत्वेनोपगताः शेषाः । बलिन इति । राशिसमांशस्थतोऽपि पबलं सिद्धम् । किंचात्र दशाविन्दु शुक्रौ युग्मांशे तिथि ओजांशकः पञ्चतिपराशरः । कोऽपि अंशे बलमुक्तं यथा सप्तवर्गे बले ग्रहबलं न राशिबलं च स्वतन्त्रं तद्वदत्रापि पुंस्त्रीराशि पुंबलं स्त्रीराशि नवांशबलं चोभयंस्वतन्त्रमेव । अतो युग्मराशिगतत्वे सति युग्मांशगतत्वं विवक्षितमत्रायोरन्यतमस्थितस्याद्बलं नोत्पद्यत इति सूर्यज्योतिर्विदो मतं परास्तम् । जातकसंग्रहे । मित्रगेहबलं द्रेष्काणबलं पुंस्त्रीराशिनवांशबलानां फलसाम्यनिर्देशान्मित्रगेहे यद्बलं तदेषां त्रयाणामिति विशेषयुक्त्या पादबलं सिद्धम् । यदा तु शुक्रेन्दू समभे समभांशे च भवतस्तदोभयोरपि स्वतन्त्रत्वात्पादद्वयं बलं युक्तियुक्तमिति गुरुचरणाः । येऽपि तान्त्रिकाः । समभे समभांशे वा स्थितयोः शुक्रेन्द्वोः पादोबलमुभयत्रापि स्थितयोरपि पाद एव बलं न पादद्वयमित्याहुस्तद्विचारितरमणीयम् । अथ केन्द्रादिबलमाह ॥

## केन्द्राद्येषु च रूपकार्द्धचरणान्यच्छन्ति
## खेटाः क्रमात् ॥

केन्द्रसंज्ञानि येषां तानि केन्द्राद्यानि केन्द्रपणफरापोक्लिमानि तेषु स्थिताः खेटाः क्रमाद्रूपकार्द्धचरणान्बलानि यच्छन्ति ददति । रूपमेव रूपकं स्वार्थे कप्रत्ययः अर्द्धं रूपार्द्धं चरणो रूपचतुर्थभागः क्रमा

इतिकेन्द्रस्थारूपबलं पणफरस्थारूपार्धं आपोक्लिमस्थाः पादबलं
ददत्यित्यर्थः। केन्द्रादिसंज्ञा वृहज्जातके। कण्टककेन्द्रचतुष्टयसं-
ज्ञाः सप्तमलग्नचतुर्थखगानाम्। केन्द्रात्परं पणफरं परतश्च सर्व-
मापोक्लिममिति। अत्र केचित्सिद्धान्तस्वीकारः कृतस्तन्मतं न ग्राह्यमि
तिद्योतनार्थं चकारः। अथोपपत्तिः। भगवान्गर्गः। केन्द्रस्थः
पूर्णबलो मध्यमबलः पणफरस्थितस्तद्वत्। आपोक्लिमगः स्तोको हीनो
नबलः खेचरोऽसुनिभिरिति। केन्द्रस्थितस्य संपूर्णबलम्। संपू-
र्णतारूपात्मिकेतिरूपं बलम्। पणफरस्थस्य मध्यबलं मध्यं त्वर्धरू-
पत्वं स्थितमित्यर्धरूपं बलम्। एवं सति पणफरापेक्षया केन्द्रस्थस्य द्वै-
गुण्यमित्यनयैव युक्त्यापोक्लिमस्थस्यापेक्षया पणफरस्थस्य द्वैगुण्य-
मिष्टमतः पणफरस्थबलादर्धहीनबलमापोक्लिमस्थस्यातः।
सर्वमुपपन्नम्। अत्र ग्रन्थान्तरोक्तरीत्याभावस्वीकारः कृतः। तथाच
राद्धवाक्यम्। केन्द्रादिस्थिता द्युसदः स्वभावफलं तदर्धं चरणोन्मितं चे-
ति। नचैतद्युक्तं मुनिभिरनुक्तत्वात्। तथाच पराशरः। केन्द्रादि-
षु स्थिता लग्नात्षष्टिः त्रिंशत्तिथिः क्रमादिति। आचार्येणाप्युक्त-
म्। अत्र केचिद्भावफलषष्ट्यंशकल्पनयाल्पतरां शुद्धिमिच्छन्ति।
तदप्ययुक्तमिति। कुत्रचित्पुस्तके तदपि युक्तमिति दृश्यते तल्लेखक-
दोषात्पतितमिति बोध्यम्। अतः सूर्यगणेशदामोदराभिमतव-
स्वकरणं कृतं तदार्यग्रन्थाविरुद्धत्वाद्बुधस्याप्यनुपातेनानीतं बल-
साधनमिवोपेक्षणीयम्। इदानीं द्रेष्काणबलमाह॥

स्त्रीखेटौ चरमे नराः प्रथमके क्लीबौ च
मध्ये तथा द्रेष्काणे वितरन्ति पादम्॥

स्त्रीखेटौ चन्द्रशुक्रौ यत्र कुत्रापि राशौ चरमे तृतीये यस्मिन्द्रेष्का-

वेस्थितौपादंबलंदत्तः । नराःसूर्यभौमगुरवःप्रथमकेंद्रेष्काणेपा-
दंबलंवितरन्तीतिस्त्रीवीनपुंसकाख्यौबुधशनीमध्येद्रेष्काणेपा
दंबलंददाति अत्रोपपत्तिः पराशरः आदिमध्यावसानेषुद्रेष्काणेषु
स्थिताःक्रमात् ॥ पुंनपुंसकयोषाख्याददद्युस्तेपिबलंग्रहाइति ।
सारावल्यामपि । पुंस्त्रीनपुंसकाख्याः चैतेष्वाद्यन्तमध्यसंप्राप्ताः
बलिनइति । अतःकेशवश्रीपत्यादिभिराचार्यैर्यदुक्तन्तत्समूल
मेव । यत्तुहोरामकरन्दे । दृक्कादिमध्यान्तगतास्त्र्योषिन्नपुंस्का
ख्याबलिनःक्रमेणेतिगुणाकरेणोक्तन्तदति भ्रान्तिविलसितम् ।
यद्यपिविज्ञानशून्येनज्ञानराजसुतेनसूर्यश्रीपतिपद्धतिटीका-
यामेतदाचार्यैःकेषांचिन्मतमंगीकृतम् । यतोदिनकररुधिरौप्र-
वेशकालेगुरुभृगुजौभवनस्यमध्ययातौ । रविसुतशशिनौविनि-
र्गमस्थौशशितनयः फलदस्तुसर्वकालमितिब्रुवतावराहादीनाम
भिमतमित्युक्तन्तदप्यसत् । दिनकररुधिराविल्यादिवराहवा-
क्यस्याष्टवर्गफलविषयत्वात् । उत्पलेनाप्येवमेवोक्तम् । अतोव
राहादीनामाशयमजानतासूर्येणयदभिधायितदयुक्तमितिसिद्ध-
म् । अथोपसंहरति ॥

## उदितंस्यात्स्थानवीर्यंत्विदम् ॥

इदंयत्पञ्चधाबलमुदितंकथिततत्स्थानवीर्यंस्यात् । पञ्चानां-
योगेस्थानबलंस्यादित्यर्थः । अमुमेवार्थंप्रकटयितुंतुशब्दोपादान
मत्रेतिबोध्यम् । एवंसमेदंस्थानबलमुक्त्वाधुनाक्रमप्राप्तदिग्बल
माह ॥

## मन्दाल्लग्नमिनात्कुजाच्चहिबुकं

शोध्यंविधोर्भार्गवान्माध्यंचाङ्गुहृतो
स्तमत्वरसभात्पुष्टंत्यजेच्चक्रत: ॥ दि
ग्वीर्यंरसहृत्तु ॥

स्पष्टम् । तुशब्दोत्रभजनविधिरुच्चबलानयनेप्रागुक्त: सएवं तिज्ञापनार्थम् । अत्रोपपत्ति: । दिग्बलंनामयोग्रहोयस्यांदिशि बलवानुक्तस्तदुत्पन्नंबलम् । एवंग्रहाणांदिक्सम्बन्धेनबलोत्कर्षा पकर्षौमिहिरागमप्रामाण्यत: सिद्धौ । तदुक्तंवराहमिहिराचा-र्यै: । दिक्षुबुधाङ्गिरसौरविभौमौसूर्यसुत: सितशीतकरौचेति । एवंग्रहाणांदिक्क्रमस्तुराशिचक्रएवकल्पनीयोभवति तथालग्नचतु र्थसप्तमदशमभावा: सव्यक्रमेणपूर्वोत्तरपश्चिमयाम्युदिक्स्थानी-याइतिप्रत्यक्षतोलक्ष्यन्ते । यत: क्रान्तिमण्डलक्षितिजसंपातो पलक्षितस्यप्राग्लग्नस्यसूर्योदयादित: प्रवृत्तिर्दृष्टासूर्योदयस्तुप्रा-च्यामेवेतिलग्नस्यपूर्वदिक्स्थानीयत्वम् । तथैवप्रत्यक्क्षितिजेऽव-स्थितस्यास्तलग्नस्यपश्चिमदिक्स्थानीयत्वम् । अथलग्नास्तोपल-क्षितयो: प्रागपरयोर्मध्येसव्यदक्षिणस्थितयोश्चतुर्थदशमभावयो: क्रमेणोत्तरदक्षिणदिक्स्थानीयत्वम् । तत्रयथोक्तदिशिग्रहस्यसं-पूर्णंबलंततोयथायथाविप्रकर्षस्तथातथाबलस्यह्रास: । परमवि-प्रकर्षेबलाभावलक्षण: परमोह्रासोयुक्त: । परमविप्रकर्षस्तुयथो क्तदिशात: क्रान्तिवृत्तार्द्धेनिजनिजसप्तमभावा । अस्मानुक्तेच-पात: । बलाभावलक्षणा द्यथोक्ताभावादन्यगतेपिक्रमेणब लस्योपचयेषड्राशिभि:संपूर्णंरूपंबलंभवतीतिग्रहाद्बलाभावलक्ष णस्थानविशोध्यशेषंषड्भाश्यल्पंषड्भिर्भक्तंफलंदिग्बलम् । षड् भाधिकेतुशेषेचक्राद्विशोधितेबलाभावलक्षणाद्भावादर्वाचीनरा-

ष्यादिःश्चिष्यतइत्यस्तौबङ्भक्ताःफलन्दिग्बलमितिसुगमम्। अत्र शेषं राश्यादिदशगुणानां तत्वादितो ऽडिगुणसूर्यं षष्ट्यं शाद्यं बलंस्यादिति सुगमोपायोवेद्यः॥ अथकालबलंनिरूपयिषुस्तावन्नतोन्नतबल-माह॥

## अथोसमयजंरूपंसदास्यात्विदस्त्रिंसन्न तानतोन्नतेशशिकुजार्कीणांपरेषांक्ते॥

अथोइति। दिग्बलकथनानन्तरंसमयजंकालजंबलमुच्यते। विद्ः बुधस्यसदेतिदिवारात्रौचरूपंबलंस्यात्। त्रिंशन्नतनतोन्न-तेशशिकुजार्कीणांपरेषांचबलीभवतः। नतंचउन्नतंचनतोन्नते-त्रिंशताभक्तेत्रिंशन्नते। त्रिंशन्नतेचतेनतोन्नतेचत्रिंशन्नतनतोन्न ते। अत्रैतदुक्तंभवति। प्रागानीतंनतंघटिकाद्यंत्रिंशन्नतंसच्च-न्द्रभौमशनीनांबलंभवेत्। उन्नतंत्रिंशन्नतंसत्परेषांरविगुरुशु-क्राणांबलंस्यात्। अत्रयुक्तिः बृहज्जातके। निशिशशिकुजसौराः सर्वदाज्ञोऽह्निचान्यइति। बुधः सर्वदारात्रौदिनेपिबली। चन्द्र भौमशनीनांरात्रौबलमथोदिवात्वन्येषांबलाभावः। रविगुरुशु क्राणांदिवसेबलमर्थाद्रात्र्यन्येषांबलाभावाइतिदिनकरकरनिक-रप्रकाशशालित्वलक्षणस्यदिनस्यमध्याह्नेदिनकरप्रकाशोत्कर्षशा लित्वादुत्कर्षतातत्तोदिनबलानामिहसंपूर्णरूपंबलम्। नक्तंब-लानांत्वत्रबलाभावः। एवमर्द्धरात्रस्यमहानिशात्वान्निशाया-मर्द्धरात्रस्यमहत्वम्। अतोरात्रिबलानांरूपंबलम्। अत्रदिन-बलानांतुबलाभावः। मध्याह्ने उन्नतंपरमंमध्यरात्रेतुनतंपरम-मितिप्रसिद्धम्। अतः सिद्धमेतत्। उन्नतपरमत्वेदिनबलानां-बलपरमत्वम्। उन्नताभावेबलाभावइति। एवंनतपरमत्वेन-

क्तं बलानावलपरमत्वं नताभावे बलाभाव इति अथानुपातः । य-
दिलिं शतुल्याभिर्नतोन्नतघटीभीरूपमिति बलेलभ्येते तदेष्टनतो
न्नतनाडीभिः किमिति । नतोन्नतेलिं शक्ते सतीमिश्रादिनबल
वतां वीर्येन्नमाद्भवतद्गुतियुक्तम् । अल्लाघवार्थं पद्यं मयोक्तम् ।
द्विघ्नं नतं प्राक्परिसाधितं यत्तमोशसौरारबलं भवेत्तत् । षष्टि-
च्युतं स्यादितरग्रहाणामहर्निशं ज्ञस्यतु षष्टिरेव ॥ १ ॥ अवर्केन-
चिन्मन्दमतिना निजनिजाहोरात्रवशाद्ग्रहाणां नतं साध्यमित्यु
क्तं तन्निरासार्थं प्राक्परिसाधितमित्युक्तम् । सूर्यस्येति यावत् ।
तथा बुधस्यापि नतोन्नतानुपातेन बलं साध्यमित्युक्तं तन्निरासार्थष-
ष्टिरेवेत्युक्तम् । शेषं स्पष्टं अथपक्षबलमाह ॥ १ ॥

## शुक्लेन्त्येतिथि १५ हृद्गतैष्यतिथयोवीर्य-
## सतांभूच्युतंपापानांद्विगुणंविधोरि
## दम् ॥

शुक्ले शुक्लपक्षे अन्त्ये कृष्णपक्षे तिथिभिः पञ्चदशभिः ॥ १५ ॥
ह्रियन्ते भज्यन्ते तेतथा तादृशा गतैष्यतिथयः सतां शुभग्रहाणां ।
चन्द्रगुरुशुक्राणां पापवियुतस्य बुधस्य च वीर्यं स्यात् । तदेव वी
र्यं भुवः रूपाच्च्युतं शुद्धं सत्पापानां सूर्यभौमशनीनां मेतेषामन्यत-
मेन युतस्य बुधस्य च वीर्यं स्यात् । एतदुक्तं भवति । शुक्लपक्षे गताः
सावयवास्तिथयः पञ्चदशभक्ताः सतां बलं स्यात् । कृष्णपक्षे एष्याः
गम्याः सावयवतिथयस्तिथिभक्ताः सतां बलं स्यात् । सद्वीर्यं रूपा
च्छोधितं पक्षद्वयेपि पापानां बलं स्यादिति । इदं पक्षवीर्यं विधोश्च
न्द्रस्य द्विगुणं कार्यम् । अथ गतैष्यतिथिसाधनमुच्यते । सूर्येन

चन्द्रस्यांशाद्द्वादशभक्ताः गतास्तिथयोभवन्ति । शेषंभागादिगतं तत्षष्टिगुणंकृत्वापुनर्द्वादशभिर्भजेत् । लब्धंजन्मसमयेवर्तमान-तिथ्याश्चान्द्रागतघटिकाःस्युः । पुनःशेषंषष्टिगुणं विधायद्वादश भक्तेपलानि । एवमग्रेपि तथाकृतेचान्द्राःसावयवागततिथयोभवन्ति । परंयदिशुक्लपक्षेजन्मस्यात् । यदितुकृष्णपक्षजन्मतदा-ताएवगततिथयस्त्रिंशच्छुद्धाएष्याः सावयवास्तिथयोभवन्तीतिज्ञेयम् । प्रतिपदमारभ्यपूर्णिमान्तंयावच्छुक्लपक्षःपूर्णिमान्तादमान्तपर्यन्तमसितइतिप्रसिद्धमेव । सूर्योनचन्द्रस्यलवार्कभागोगतातिथिःषष्टिगुणावशेषात् । द्विचन्द्र १२ लब्धघटिकादिचान्द्रंभवेदिदंपक्षबलस्यसिद्ध्यै ॥ १ ॥ कृष्णेतुपक्षेरवशुद्धच्युतासौ-गतातिथिःसावयवाऽगतास्यात् ॥ गतविकलाःसूर्येन्दुगत्यन्तरेणभक्ताः सत्योगतघटिकाः करणादौसाधितास्तानात्रोपयुज्यन्त-इतिनसाध्याः ।मासास्तथाचतिथयस्तुहिनांशुमानादित्युक्तेस्तिथिशब्देनचान्द्रदिनस्यैववाच्यत्वाच्चान्द्यघटिकाः साध्याइतियदुक्तंतद्युक्तम् । करणादौतुचान्द्रघटीनामज्ञातत्वात्सावनादेव-व्यवहारसिद्धेः सावनाघटिकाआनीताइतिबोद्धव्यम् । एतद-न्यैर्वासनावाद्भिरप्यगणकारैरनुक्तमपिमयैवपार्थक्येनोदितमित्य-वधेयम् । ननुक्षीणेन्दोः पापत्वाभिधानात्कथंचन्द्रस्यशुभत्वमे-वव्याख्यातम् । नचचन्द्रस्यसाहजिकशुभत्वाच्छुभत्वमेवाद्रियत-इतिवाच्यम् । विनिगमनाविरहाद्बुधस्यापिशुभत्वाङ्गीकारापत्तेरितिचेत् । मैवम् । चन्द्रस्यचयवनेश्वरवाक्यबलाच्छुभत्वमेवाङ्गीक्रियतेबुधस्यतुसर्वंमतत्वाद्यथोक्तैवव्यवस्थातथाचयवनेश्वरःक्रूरः ग्रहोऽर्कः कुजसूर्यजौतुपापौशुभाः शुक्रशशाङ्कजीवाः सौम्यस्तु-सौम्यैर्व्यतिमिश्रितोन्यैः पापैस्तुतुल्यप्रकृतिरवमेति ॥ १ ॥ मासितुशुक्लप्रतिपत्प्रवृत्तः पूर्वेशशीमध्यबलोदशाहे । श्रेष्ठोद्वितीये

ऽल्पबलस्तृतीयेसौम्यैर्दृष्टोबलवान्सदैव ॥ २ ॥ तस्माद्यनेश्वर-
मतेचन्द्रस्यशुभत्वमेवेतिसिद्धं यद्यत्रचन्द्रस्यपापत्वंयवनेश्वरस्या
भिप्रेतंस्यात्तदाहृतीयेदत्रकेऽल्पबलइतिनोक्तमेवस्यात् तस्मात्-
क्षीन्दुः पापइत्यन्येषांमतम् एवंमतभेदेपद्धतिकारैर्यवनेश्वमत-
मेवाङ्गीकृतम्। यतश्चन्द्रस्यचेष्टाकेन्द्रजंबलंशुक्लपक्षबलंचसममे
वभवतीतिपक्षवीर्यंचन्द्रस्यद्विघ्नमुक्तम् । चेष्टाबलपक्षबलसा-
म्यंतुचन्द्रस्य पाप त्वाङ्गीकारेन सङ्गच्छते। तथाहि। पूर्णिमा
न्तेगततिथयःपञ्चदश १५ एतेपञ्चदशभक्ताजातंपक्षबलंरूपम्।
१। तथाव्यर्केन्दुराशिषट्कं ६ षड्भक्ताजातश्चेष्टाबलमपिरूप
१ मेव। अथदर्शान्तेएष्यतिथिःपूर्णम् । अतःपक्षबलाभावः।
व्यर्केन्दुरपिपूर्णम्। अतश्चेष्टाबलाभावोपि। अतश्चेष्टाबलपरम
त्वेपक्षबलपरमत्वं चेष्टाभावेपक्षबलाभावइतिसिद्धम् । क्षीणे-
न्दोःपापत्वस्वीकारेतुभूच्युतस्यापानामितिरूपंपक्षवीर्यं दर्शान्ते
समायाति। नेदंयुक्तम् । यतश्चेष्टाबलाभावात्तत्राप्यभावेन
भवितव्यम् । अतःपद्धतौसर्वैश्चेष्टबलानयनेचक्रार्द्धहानौतनुगे
रवलरावमादिस्थलेचन्द्रस्यशुभतैव। बुधस्यतुयथाप्राप्तापापता
शुभतावाग्राह्या। एषांमतेरिष्टयोगादौयच्चेन्दोःपापत्वाभिधा
नंतत्क्षीणेन्दुबलचक्रंवेद्यमितिदिक्। अत्रसुन्दरमिश्रवाक्यम्।
सदाशुभस्यैवविधोर्हि निम्नं पक्षस्यवीर्यंगणकैर्निरुक्तम्। सर्वंचपा
पाः कुजसूर्यमन्दाः पापैर्युतोज्ञोपिपरैशुभाः स्युरिति ॥ १ ॥
अथोपपत्तिः। बृहज्जातके। बहुलसितगताः स्युः क्रूरसौम्याः
क्रमेण। कृष्णपक्षेपापानांबलंशुभानामथोह्यलाभावः। शुक्लपक्षे
शुभानांबलमर्थात्पापानांबलाभावः। तत्रप्रतिदिनमुपचीयमा-
नकलाकलापकलानिधिलक्षणस्यशुक्लस्यपक्षस्यपौर्णमास्यन्तेस-
कलत्वोपचयादुत्कृष्टता। अतस्तत्रशुभानांबलंपरमंरूपमितम्।

गततिथयोपिपरमाः पञ्चदश १५ शुक्लप्रतिपदादौतुबलाभाव-स्तत्रगततिथ्यभावोपि। अतोनुपातः। यदिपञ्चदशभिर्गततिथि-भीरूपंबलंतदेष्टाभिः किमिति। गततिथितिथि १५ भागः शु-क्लपक्षे सतांबलंस्यादित्युपपन्नम्। एवंयएवपूर्णिमान्तः सएवकृ-ष्णपक्षादिरितिकृष्णपक्षादौरूपंबलम्। १। तत्रैष्यतिथयः प-ञ्चदश ॥ १५ ॥ परमाः। अमावास्यान्तेशुभानांबलाभावस्तत्रै-ष्यतिथ्यभावश्च। अतोनुपातेनैष्यतिथिपञ्चदशभागः कृष्णपक्षेस-ताबलंस्यादित्युपपन्नम्। एवंशुक्लकृष्णपक्षयोरेष्यगततिथ्यनुपा-तेनक्रूराणामपिबलंसाधनीयम्। तत्राचार्यैर्लाघवाच्छुभबलमेव भूक्त्युक्तमुभयोरपिपक्षयोरशुभानांबलंस्यादित्युक्तम्। उपपन्नमे-तत्। यतः सितादेर शुभबलमपचीयते शुभबलतूपचीयते कृष्णादितस्तुशुभबमपची क्रूरबलमुपचोयतेयावानेवोपचयस्ता-वानेवापचय इति। उपचया पचयौतुरूपमध्य इति रूपात् च्युतं शुभबलमशुभबलं स्यादिति। सदाशुभस्यैवविधोः पक्षबलं वक्ष्यमाण चेष्टाकेन्द्रोत्थ चेष्टाबलेन सममेव जायत-इतिपुनस्तयोर्योगेक्रियमाणेद्विघ्नमेवभविष्यतीतिपूर्वमेवाद्विघ्नंका-र्यमित्युक्तम्। एवंसूर्यस्यायनबलमपिचेष्टाबलेनतुल्यत्वाद्विगुणं-कार्यमित्यग्रेप्रतिपादयिष्यते। अर्कस्यद्दग्घ्नमिति। अतः पुष्पव-तोश्चेष्टाबलेवीर्यैक्ये क्रियमाणेसतिनयोर्ज्य पूर्वमेवयो जितत्वा-दत एव वक्ष्यते। प्राग्वन्न वीर्यायते इति सर्वंनिरवद्यम्। पक्ष-वीर्यसाधनंसुगमोपायेनोक्तम्पराशरेण। चन्द्रादर्कंविशोध्यच। षड्भाधिकेविशोध्याकांङ्गागोकृत्याचभिर्भजेत्। पक्षजस्बलमिन्दु-श्चशुक्रार्याणांतुषष्टितः॥ हित्वान्येषामिति। अत्रापिज्ञशुक्रा-र्याणांयद्बलन्तदेवेन्दोःपक्षद्वयेपिबलमित्यर्थलाभात्क्षीणचन्द्रः शु-भएवेतिप्रौढंनिर्व्यूढम्। अस्योपपत्तिस्त्रैराशिकेनोच्चबलवत्सुग-मा। अथत्र्यंबलमाह॥

अथाङ्कस्वांशकेषुक्रमात्। सौम्यार्कार्कभुवां निशः शशिसितारा णां च रूपं सदेज्यस्य॥

अथेति। पक्षबलानन्तरम्। अह्नोदिनस्य त्र्यंशकेषु सौम्यार्कार्कभुवां क्रमाद्रूपं बलं स्यात् सौम्यो बुधः। अर्कः सूर्यः। अर्कभूः शनिः। तेषां सौम्यार्कार्कभुवामित्यत्र द्वन्द्वसमासः। निशः रात्रेस्त्र्यंशकेषु क्रमात् शशिसितारा णां चन्द्रशुक्रभौमानां रूपं बलं स्यात्। चकारः समुच्चये। ईज्यस्य बृहस्पतेः सदेति दिवानिशं यत्र क्वापि त्र्यंशे रूपस्बलस्यात्। एतदुक्तम्भवति। प्रथमतो दिनेरात्रौ वा जननमस्तीति विज्ञाय ततस्तन्मानस्य त्रेधा विभागम्विधाय यस्मिन्त्र्यंशे जन्म तदंशपते रूपं बलं गुरोस्तु सदैव रूपं बलं ग्राह्यमिति। अत्र प्रोक्तग्रहाणां दिनरात्रित्रिभागबलं होरागमप्रमाणसिद्धम्। तदुक्तं होरामकरन्दे। निशामुखे शशतरुचिर्बलीयान् भृगुर्निशीथे कुसुतो निशान्ते॥ प्रातर्बुधो मध्यदिने दिनेशः शनिर्दिनान्ते धिषणः सदैवेति॥ १॥ अथ वर्षेशादिबमाह॥

अथाङ्घ्रिचयाद्बली किल समामासद्युहोरेश्वरः इति॥ ६॥

अथशब्द आनन्तर्ये। समामासद्युहोरेश्वरः अङ्घ्रिचयात् पाद वृद्ध्या बली स्यात् समा वर्षं, मासः प्रसिद्धः, द्युदिनं द्यु इत्यव्ययं दिनशब्दवाचकमिति चौरस्वाम्यादयः। होराकालहोरा आसामीश्वरः स्वामी, अङ्घ्रिचयाद्बली वर्षेशस्य पादो बलं मासेशस्यार्द्धं दिनेशस्य त्र्यंश्चरणाहोरेशस्य रूपं बलमित्यर्थः। किलेत्यागमप्रामाण्यसूचनार्थम्। वर्षमासेशयोरानयनमुक्तं केशवसांवत्सरैः स्वकृतटीकायाम्। तद्यथा। द्विष्टो द्युपिण्डो रदभूयुतोऽर्कयुक्खाङ्गाप्त-

हृत्खाग्निहृतः फले युते । वेदैर्गुणैस्त्रिविहृतेऽद्रिशेषितेऽर्काद्ब्रह्मतुल्यैकरणेऽब्दमासपौ ॥ १ ॥ अस्यार्थः । ब्रह्मतुल्यैकरणे द्युपिण्डोऽहर्गणः द्विष्ठः एकत्र रदभूभिर्द्वात्रिंशदधिकशतेन युतः । अपरत्र अर्कैर्द्वादशभिर्युक् युक्तः कार्यः । आद्यः खाङ्गाग्निभिः षष्ट्यधिकशतत्रयेण हृत् भक्तः अपरः खाङ्गाग्निभिस्त्रिंशता हृतः । उभे फले क्रमेण वेदगुणैर्युते ततस्त्रिविहृते चाद्रिशेषिते सप्ततष्टे सती अर्कमारभ्य गतौ वर्षमासेशौ भवतः । अत्र प्रकृष्टत्वाभावः प्रामादिकः अतस्त्रिविहृताद्रिशेषितेस्तो ब्रह्मतुल्ये रवितोऽब्दमासपाविति पाठः । पाठ्यः । त्रिविहृते च ते अद्रिशेषिते चेति विग्रहः । फले इति सप्तम्यन्तं कृत्वा यथाश्रुतमेव व्याख्येयमिति वा । अत्रोपपत्तिः । सावनवर्षमासेशौ साध्येते । तत्रता ।

कल्पादेः सकाशाज्जन्मदिनजार्कोदयपर्यन्तमहर्गणः साध्यः ततो यदि दिनानां षष्ट्यधिकशतत्रयेण ३६० त्रिंशता चैकं वर्षमेको मासश्च क्रमेण लभ्यते तदेष्टाहर्गणेन किमित्यभीष्टाहर्गणः खाङ्गाग्निहृत्खाग्निहृतः फले सावनानि गतवर्षाणि सावनागतमासाश्च भवन्ति । यद्येकेन वर्षेणैकेन मासेन चैकमितौ वर्षेशो मासेशश्च क्रमेण लभ्येते तदेष्टैर्वर्षैर्मासैश्च किमित्यभीष्टवर्षमासतुल्या एव तदीशा लब्धास्ते वाराः सप्तैवातः सप्ततष्टाः शेषं वर्षमासेश्वरौ भवत इत्युपपन्नम् । अथैतौ कस्माद्वासराद्गणनीयाविति चिन्त्यते । कल्पादौ वर्षेशो रविरासीत्ततो द्वितीयवर्षे बुधस्तृतीयवर्षे शनिरितो रवेरधःकक्षाक्रमेण तृतीयस्तृतीयो वर्षेशो भवतीति । एतदुक्तं भवति । कल्पगतसावनवर्षगणेऽद्रितष्टे यदि शून्यं शेषं तदा सूर्योऽब्दपो यद्येकस्तदा बुध इत्यादि । एवं कल्पादौ मासेशो रविस्ततो द्वितीये मासि मासेशो भौमस्तृतीये गुरुरतो रवेरूर्ध्वं कक्षाक्रमेण द्वितीयो मासपतिरित्यवधेयम् । उक्तञ्च सूर्यसिद्धान्ते । वर्षाधिपतयस्तद्वत्तृतीयाः प-

रिकीर्तिताः ॥ उर्ध्वक्रमेणशशिनोमासानामधिपाःस्मृताइति ।
तद्वदितिमन्दादधःक्रमेणेत्यर्थः । शतानन्दोपि । शाकादिसौ-
राब्दगणात्कलेर्वावर्षाधिपाः सप्तहृतावशेषाः । शुक्रेंदुवाचस्प-
तिसूर्यसौम्यशनैश्चराराः क्रमशोभवन्ति ॥ १ ॥ अब्दोऽर्कनिघ्नो-
रविमासयुक्तः सप्तावशेषैरसमासनाथाः ॥ ज्ञशुक्रसूर्यारसुरेज्य
सौरिचन्द्रायुगात्स्वावनमासतोऽन्यो ॥ २ ॥ सूर्यादिभिः सावन
वर्षमासनाथयोः साधितत्वात्साधितौसौरवर्षमासपतीसूर्यादु-
त्क्रमेणगणनीयाविति सिद्धम् । अहर्गणादावुच्चावचजनप्रसिद्ध-
रविचन्द्रभौमबुधेत्यादिक्रमेणवारगणनायाउक्तत्वात् । यत्तु
तदन्यथाभावेशिष्याः क्लिश्येरन्निति यथातेनैवक्रमेणवर्षमासप-
त्योर्गणनाविधातुंशक्यतेतथायतितमाचार्यचरणैः । तद्यथा ।
कल्पादौरविर्वर्षस्वामीततोद्वितीयवर्षेवर्षेशोबुधस्तयोः प्रसिद्धक्र
मेद्विसितमन्तर मेवंप्रथमाद्यमासस्वामिनोर्द्विसितमन्तरमतो-
ऽनुपातः । यद्येकेनवर्षेण मासेनचद्विमितेन्तरेलभ्यतेतदेष्ट-
वर्षैर्मासैश्चकिमिति । उक्तञ्चसूर्यसिद्धान्ते । मासाब्ददिनसंख्या-
प्तं द्वित्रिघ्नं रूपसंयुतम् । सप्तोद्धृतावशेषौतुविज्ञेयौमासवर्षपौ ॥
अतः कल्पगताः । वाशिष्ठेपि । माससमान्दिनभक्तादुगणाल्ल-
ब्धं पृथग्यमगुणघ्नम् ॥ सैकंचसप्तभक्तम्मासमाधीश्वरावर्कात्
सोमसिद्धांतेपि । द्युगणात्त्रिशताषड्घ्नषष्ट्याद्वित्रिहतेफले ॥
सैकेसप्तावशेषितेमासवर्षपतीक्रमादिति । वर्तमानगणनार्थंसै
कमित्युक्तमत्र । अहर्गणोद्विष्ठः खाङ्गाग्निहृत्वाग्निहतः फलेचि
द्विहते षट्त्रिंशेषिते अर्काद्गतौवर्षमासपतीप्रसिद्धक्रमेणभवतइत्यु-
पपन्नम् । अत्राचार्येणलाघवार्थंदिनगणस्यखण्डद्वयंकृतम् ।
एकंकल्पादेर्ब्रह्मतुल्यकरणादिपर्यन्तम् । अपरंब्रह्मतुल्यादेर्जन्म-
दिनजार्कोदयावधि यदेवद्युगणस्याद्वितीयखण्डंसएवब्रह्मतु-

ल्याहर्गणइतिप्रसिद्धतरम् । अतोद्विष्ठोब्रह्मतुल्यद्युपिण्डः खाङ्गा ग्निहृदित्याद्युपपन्नम् । परमेतौवर्षमासेशौब्रह्मतुल्यादिजाब्द-मासेशाख्यांभवतोऽपिचितौतुर्गविवारादितीतः क्षेपान्वितौकार्यौ तत्क्षेपःसाध्यते। कथितकल्पगतोऽर्कसमागणोरविगुणइत्यादि-प्रकारेणब्रह्मतुल्यद्यौसाधितोऽहर्गणःकरशरयुगसप्ताभ्राभ्रषड्वह्नि षट्खद्वितुरगः ७२०६३६००७४५२ प्रमितः । अयंषष्ट्यधिकश तत्रयभक्तोलब्धागताब्दाः सावनाः।२००१७६६६८७ शेषंर-दभूतुल्यम् । १३२ गताब्दास्त्रिगुणाः सप्तभक्ताः । शेषंपञ्च ५ अतोग्रन्थादितस्त्रिगुणवर्षेषुपञ्चमितःक्षेपोयोज्यस्ततःसप्ततष्टेसूर्या द्यतोऽब्देशः स्यादितियुक्तम् । यदितुकेवलवर्षेष्वेवक्षेपोयोज्यतेऽ नन्तरंत्रिभिर्गुण्यतेतदाक्षेपस्त्रिगुणोयोजितोभविष्यतीतित्रिभ-क्तः क्षेपोयोज्यः । अत्रपञ्चमितेक्षेपेविभक्तेनिरग्रंफलंनायातीति पञ्चसुसप्तसंयोज्यत्रिभिर्भागेगृहीतेलब्धाश्चत्वारः ४ अतोवेदैर्युत मितियुक्तम् । एवंद्युगणस्त्रिंशद्भक्तोलब्धागतमासाः सावनाः २-४०२१२००२४८ ॥ शेषमर्क १२ तुल्यम् । गतमासाद्विगुणाः सप्तभक्ताःशेषषट् ६ अतोद्विघ्नमासेषुषड्मितक्षेपः क्षेप्यस्तत्रसप्तत ष्टे सूर्याद्यतोमासेशः स्यात् । अत्राचार्यैः केवलवर्षेष्वेवक्षेपोयो-जितइतिद्वाभ्यांभक्तोजातास्त्रयः । अतोगुणैर्युतंफलमित्यपिसा-धुग्रहा । सावनवर्षान्तेयोवारः सोऽब्दपतिः सावनमासान्ते वारो मासेशइति । अहर्गणः खाङ्गाग्निभक्तः खाग्निभक्तश्चफलेसावन वर्षमासाभवन्तीतिप्रागुक्तंततोऽनुपातः । यद्येकेनसावनवर्षेणष ष्ट्यधिकशतत्रयंदिनानितदेष्टैः किमितिफलंग्रन्थादेः सकाशादि ष्टसावनवर्षादिपर्यन्तसावनदिनानि स्युस्ततोवाराः सप्तैवेतिसप्तत ष्टानिकार्याणीतिपूर्वमेवलाघवार्थमब्ददिनानि ३६० सप्तभक्ता निश्शेषंत्रयमतोग्रन्थोदितः सावनाब्दगणस्त्रिभिर्गुणनोयइत्युपप

न्नम् । एवंमासदिनानि ३० सप्तभक्तानिशेषंद्वयमतोमासगणो-
द्विगुणइतियुक्तम् । अस्मिन्मतेसूर्यात्प्रसिद्धक्रमेणैवगणनेतिसर्वं-
मवदातम् । क्षेपोपपत्तिः । प्राग्वदेव । अथाब्दमासशेषदिनयो-
गकारणमुच्यते । ब्रह्मतुल्यकरणादौसावनवर्षेशः शुक्रआसीत् ।
वर्षशेषदिनानिरदभूतुल्यानि १३२ अतोग्रन्थादेरष्टाविंशत्यधि-
कशतद्वयमितेषुसावनदिनेषुगतेसत्सुवर्षेशश्चन्द्रइतिज्ञायते।ग्रन्था
दितोवर्षेशानयनेवर्षदिन ३६० पर्यन्तं चन्द्रोनायाति । कल्पा
द्यहर्गणतोवर्षनाथेसाध्यमानेग्रन्थादितोगगनाङ्गगुणा ३६० दि
नमध्येपिचन्द्रोलभ्यते । अतोग्रन्थादिजाब्दशेषदिनानिसंयोज्य
वर्षेश्वरःसाध्यः । अन्यथाब्रह्मतुल्याहर्गणसाधितवर्षेशस्यक्षेप-
युतस्यकल्पाद्यहर्गणसाधितवर्षेशतुल्यत्वंभज्येतैव । एवंमासेशे-
पियोज्यम् । एवममुनाप्रकारेणजन्मकालेवर्षमासेशौसाध्यौयत्र
वारेरव्यादिकेजन्मसएवदिनेशइतिस्पष्टम् । अत्रवारप्रवृत्तिरर्को-
दयादेवनतुगणितसाधितवारप्रवृत्तिकालात् यतुरत्नावल्याम् ।
वारप्रवृत्तेर्जननोत्थवारः प्रकल्पनीयः सदिनाधिनाथइतिगणेशे
नोक्तंतदयुक्तंमुनिमतविरोधात् । तथाचवसिष्ठसंहितायाम् ।
वारप्रवृत्तिविज्ञानंचगणवारार्थमेवतत् । अन्येषुसर्वकार्येषुदिना-
दिरुदयोरवेरिति ॥ १ ॥ यद्गणितेनवारप्रवृत्तिसाधनंकृतंतत्च-
णवारार्थंकालहोरासाधनार्थमित्यर्थः। अन्यकार्येषुसूर्योदयादेवा
वारस्यप्रवृत्तिरिति । होरेश्वरानयनंवशिष्ठसिद्धान्ते । प्रभाकर-
स्योद्गमनात्पुरेस्याद्वारप्रवृत्तिर्दशकन्धरस्य । चरार्द्धदेशान्तरना-
डिकाभिरूर्ध्वंतथाधोप्यपरत्वतस्मात् । वारप्रवृत्तेर्घटिकादिने-
शात्कालाख्यहोरापतयः क्रमेण । सार्द्धेननाडीद्वितयेन २ । ३०
षष्ठः षष्ठस्यषष्ठस्यपुनः स्युरिति ॥ २ ॥ स्वार्कोदयाद्येनकालेनप्रा-
गुज्जयिन्यांलङ्कार्कोदयः सकालोवारप्रवृत्तिकालइतिस्पष्टम् । सौर

मतेतुलङ्कार्द्धरात्रे सृष्टिरितिस्वार्द्धरात्राद्यवराभावेनकेवलदेशान्तरघटीभिरेवप्रागूर्ध्वंवावारप्रवृत्तिरित्युक्तंसूर्यसिद्धान्ते । तद्देशान्तरनाडीभिः चपार्द्धेऽप्यधिकोनकइत्यादिना । वसिष्ठादिमुनिब्रह्मगुप्ताद्याचार्यमताविरोधायमध्यरात्रादित्यध्याहृत्यतस्माद्देशान्तरनाडीभि प्राक्पश्चाद्देशयुक्तोनेचपार्द्धमितेकालेवारप्रवृत्तिः । परमत्रचपार्द्धपदंनिरचजचपार्द्धविषयमित्यनेनसौरभाष्येऽस्मत्पितृचरणैः सम्यग्व्याख्यातम् । एवमनेनप्रकारेणहोरेशोज्ञेयइतिप्राप्तेःकेचित्तुतत्कालार्कन्यूनलग्नांशपिण्डोभक्तः १ पञ्चक्षोणीभिर्मुक्तहोराइत्यनेनहोरेशमाहुः अवैवंमतद्वैधेऽर्कलग्नान्तरसाधितोहोरेशोऽत्रपद्धतौग्राह्यइत्यस्मद्गुरूणांमतम् । एतदेवयुक्तमुत्पश्यामः । तथाहि । भवनस्यार्द्धहोरेत्युक्तेर्दिनावसानसमयेषट्लग्नानिव्यतीतानिभवन्ति । तद्दलानिचद्वादशतुल्यानीति द्वादशैवहोरायुक्तास्ताएवतत्कालार्कन्यूनलग्नांशपिण्डतुल्येननायान्तीत्ययमेवहोरासाधनप्रकारोऽत्रहोराशास्त्रेग्राह्यइतियुक्तम् । नचानेनैवप्रकारेणसर्वत्रहोरेशानयनेपूर्वप्रकारेणतदानयनमुन्मत्तप्रलपितमिवस्यादितिवाच्यम् । यस्यग्रहस्यवारेयत्किंचित्कर्मप्रकीर्तितम् । तत्तस्यकालहोरायांसर्वमेवविधीयतइत्यादौतस्योपयोगात् । तस्मात्पद्धतावर्कलग्नान्तरसाधितोहोरेशोग्राह्योऽन्यत्रतुवारप्रवृत्तेर्घटिकाइत्यादिप्रकारानीतोहोरेशोग्राह्यइतिविषयव्यवस्थासुस्था । तत्कालार्कन्यूनलग्नस्यराश्यादेर्भागकरणार्थंत्रिंशद्गुणकः पञ्चदशहरश्च । गुणहरौहरेणापवर्त्यलब्धंद्वयंगुणस्थाने । अतोऽर्कोनलग्नराश्यादिर्द्विगुणःकार्यस्तथाकृतेराश्यादिस्थानेयदङ्कंनिष्पद्यतेतेनसप्त ७ तष्टेनतुल्याएवदिनाधिपाद्याः रविशुक्रसौम्यशशाङ्कसौरेज्यकुजाइत्यनेनगताहोरेशाः स्युः । यदा । द्विघ्नस्यार्कोनलग्नस्यकेवलंराशयः पञ्चघ्नाःसप्तभक्ताः शेषसमो-

गतोह्योरेशोदिनाधिपाक्रमेणैवस्यादितिलाघवम्। अतएवोक्तं- पद्धतिप्रकाशिकोनाङ्गदृग्घातग्रहेषु ५ धातोह्योरापतिर्वारपतिः प्रयातद्रूति। अधुनाचेष्टाबलं विवक्षुस्तावत्तदङ्गीभूतमायनबलंभु- जङ्गप्रयातेनाह॥

सदाक्रान्तिभागैर्युताज्ञस्यसिद्धा २४। शनीन्द्वोर्युतोनाक्रमाद्याम्यसौम्ये। वि लोमंपरेषागजाम्भोधि ४८ भक्ताभ वेदायनंवीर्यमर्कस्यदृग्घ्नम्॥

ज्ञस्यबुधस्यसदेति। दक्षिणोत्तरैर्वाक्रान्तिभागैर्युताः सि- द्धाः गजाम्भोधिभक्ताः सन्तः आयनंवीर्यंभवेत्। शनीन्द्वोः क्र- मादितियाम्यैर्युताः सौम्यैरूनाः सिद्धाःपरेषारविकुजगुरुशुक्रा- णांविलोमितिसौम्यैः क्रान्त्यशैर्युतायाम्यैरूनाः सिद्धाः गजाम्भो धिभक्ताः आयनंबलंस्यात्। एवंसाधितंसूर्यस्यायनबलंदृग्घ्नका र्यम्। दृग्भ्याहन्यतेतदृग्घ्नद्विगुणंकार्यमित्यर्थः। क्रान्तिसाधनं ग्रहलाघवे। चत्वारिंशदशीतिरद्रिकुभुवः शचेन्दवोभूघ्नतीषट्- खाश्वोगिजिनाश्विनोङ्गविकृतीखाब्धश्विनः सायनात्। खेटा द्दोलंवदिग्लवप्रमगतोङ्कोसौतदूनागताच्छेषघ्नाद्दशलब्धियुग्दश-- हृतोशाद्योऽपमः स्यात्स्वदिक्॥ १॥ अत्रोपपत्तिः। अयनंगम नंतद्वशादुत्पन्नंबलमायनबलमित्यन्वर्थं नामयत्रायनेयेषांबलंतदु क्तंसारावल्याम्। उत्तरमयनंप्राप्ताः शुक्रकुजार्कसुरमन्त्रिणोब- लिनः। याम्यशशिरविपुत्रौद्वे अपिशशिजः स्ववर्गसंस्थोस्वेति। उत्तरायणेशुक्रार्ककुजगुरूणांसंपूर्णबलमुक्तंतत्रसायनमिथुनान्ते-

परमोत्तरगमनात्संपूर्णबलंसंपूर्णतारूपात्मिकेतिरूपंबलंअर्थादेवै
षासायनधनुरन्तेदक्षिणगमनस्यपरमत्वाद्वलाभावः। दक्षिणग
मनपरमत्वेरूपंबलम्। चन्द्रशन्योः परमोत्तरगमनेतुबलाभावः
बुधस्यतुपरमोत्तरगमनेपरमदक्षिणगमनेचरूपंबलम्। बलाभा
वस्थानाद्बलपरमत्वस्थानपर्यन्तद्विगुणपरमक्रान्त्यंशागजाश्वोधि-
मिताः सन्ति। अथबलाभावस्थानादहोरात्रवृत्तनिष्टेष्टग्रहस्था-
नस्यान्तरेयेऽपमांशास्तैर्बलानयनंकर्तुमुचितमितिचन्द्रशनैश्चरयो
र्यौम्यक्रान्तौजिनांशमितायांपरक्रान्तौयोजितायांसत्यांसौम्या-
यांतुवियोजितायांबलाभाव स्थानग्रहस्थानान्तरालेऽपमाद्याभ-
वन्ति। कविरविगुरुभौमानांसौम्यक्रान्तौपरक्रान्तौ ॥ २४ ॥
युक्तायांयाम्यायांवियुक्तायांबलाभावस्थानाद्ग्रिमाक्रान्तिर्भव-
ति। बलाभस्थानादेतत्क्रान्तिभागान्तरेखेटोऽस्तीतिभावः। बुध
स्यतुसौम्यायांयाम्यायांचयोजितायाभुज्यनानायनादेर्गिमा--
क्रान्तिर्भवति। यदाष्टचत्वारिंशद्भागान्तरेग्रहस्तदासंपूर्णबलम्।
अथानुपातः। यदिबलाभावस्थानान्तरेणाष्टाचत्वारिंशन्मितेन
रूपंबलंतदेष्टेनकिमितिसर्वमुपपन्नम्। ननुसर्वंचसाध्यस्यपरम
त्वलभावस्थाद्वाविर्मौनिर्णीय तच्चान्यस्यापिपरमत्वाभावौनि-
र्णीयतदन्यवशादन्तरेऽनुपातः क्रियते। यथाग्रहफलाभावेगात
फलं परमं ग्रहफलपरमत्वेगतिफलाभावस्तचकेन्द्रकोटिज्याया
अपिपरमत्वाभावौ तस्तदन्तरेकेन्द्रकोटिज्यातोऽनुपातः क्रिय-
ते। प्रकृतेचबुधस्यायनद्वितयेपिबलस्योक्तत्वात्क्वाप्यभावस्यनिर्णे-
तुमशक्यत्वाच्चैराशिकं कथंप्रवर्ततेतिचेत्सत्यम्। बुधस्यचदक्षिण
गमनसमाप्तौसम्पूर्णं बलं ततोह्रासक्रमेणसायनमेषादावर्द्धबल-
स्यह्रासः ततोवृद्धिक्रमात्परमोत्तरगमनेसम्पूर्णंबलं पुनर्ह्रासक्र-
मात्तुलादावर्द्धबलापचयः। यद्यत्रबलाभावशब्देनबलशून्यत्वं

विषचितं तत्तु कथमपि न स्यात्। अयनद्वयेपि सम्पूर्णबलाङ्गीकारात्। किन्तु सायन मेषादौ तुलादौ चक्रान्तेरभावेन रूपबलस्यार्द्धतुल्यपरमक्रान्त्यौ राशिकप्रवृत्तेरन्यथानुपपत्त्यातदेव बलाभावस्थानमिति मन्तव्यम्। अथानुपात:। बलपरमापचयलक्षणाभावस्थानस्य बलपरमत्वस्थानस्य चान्तरे चतुर्विंशतिभाग: सन्तीति चतुर्विंशतिभागैरूपार्द्धं बलं तदा यथास्थितग्रहक्रान्त्यंशै: किमिति। एवं स्वक्रान्तिभागाष्टाचत्वारिंशदंशोनिष्पन्न:। अयं रूपार्द्धयोज्यस्तत्र मिथोहराभ्यासितमेन समच्छेदविधाने कृते सदाक्रान्तिभागैर्युता: सिद्धा: अष्टचत्वारिंशद्भक्ता बुधस्यायनबलं स्यादितियुक्तम्। एतदायनबलानयनं पद्धतिप्रकाशे लाघवेन समयोक्तम्। यास्योत्तरै: स्वाङ्घ्रियुतायमांशैर्युतायुतापूर्णगुणा: शशीनौ ॥ व्यस्तं परेषामनिशं बुधस्ययुता भवेदायनवीर्यमेतत् ॥ १ गणेशदामोदरसूर्यमुख्यै: स्पष्टायमात्साधितमाप्ततत्त्वै ॥ उपेक्षितत्वादुगुरुकेशवाद्यैरयुक्तमेवेतिसुधीभिरूह्यम् ॥ २ ॥ स्पष्टार्थाविमौ। अत्रवासनायदिचतुर्विंशत्यंशैस्त्रिंशत्कलातुल्यं बलं तदेष्टक्रान्तिभागै: किमिति। अत्रगुणाहरौ षड्भिरपवर्त्यं जातागुणस्थाने पञ्च ५ हरेचत्वार: ४ योराशि: पञ्चभिर्हन्यते चतुर्भिर्ह्रियते स स्वाङ्घ्रियुत एव भवतीति स्वाङ्घ्रियुतापमांशैरित्युक्तम्। शेषोपपत्ति: प्रतिपादितैव। स्पष्टापमाद्बलसाधनस्यायुक्तत्वमग्रे वदिष्याम:। प्रकारान्तरमपि तत्रैवोक्तम्। यद्वापक्रमसिद्धां २४ शसंस्कृतं रूपमर्द्धितम्। रूपाद्यमायनं वीर्यं स्याद्द्वेद्विगुणं कुरु ॥ ३ ॥ इष्टक्रान्तिसंस्कृतापरक्रान्ति २४ र्गजाम्भोधिभक्तायनबलं स्यादिति प्रागुक्तम्। तच्चतुर्विंशत्यापवर्ते कृतेऽपक्रमसिद्धांशसंस्कृतमित्यादिप्रकारो निष्पद्यते। नन्वेतदायनबलं स्पष्टक्रान्तित एव साधयितुं युज्यते न मध्यक्रान्तित:। तथाहि।

यनं गमनं तदुत्पन्नं बलमायनबलमिति तावत्प्रसिद्धम्। गमनं तु चन्द्रादीनां स्पष्टक्रान्तिवशेनैव भवति। क्रान्तिर्नाम नाडीमण्डलात् क्रान्तिवृत्तावधि दक्षिणोत्तरगमनं क्रान्तिवृत्तादपि दक्षिणोत्तरमन्तरं शरः। तयोः संस्कारेण नाडिकामण्डलाद् ग्रहस्य स्पष्टं दक्षिणोत्तर गमनं सैव स्पष्ट क्रान्तिरुच्यते चन्द्रादीनां परमशरांशाः चं। मं। बु। वृ। शु। श। एभिर्युताश्चतुर्विंशत्यंशा जाताश्च ४। ५। ४। १। ८। २। न्द्रादीनां परमाः क्रान्त्यंशा- लि ३० २८ ०० ३० ०० ३०। च्यते। इमां परक्रान्तिं गृहीत्वा यद्द्विगुणया रूपं बलं तदेष्टस्पष्टक्रान्तिसंज्ञत परक्रान्त्या कि- मित्यनुपातेनायनवीर्यं साधनं युक्तं जि चं। मं। बु। वृ। शु। श नांशतुल्यायां परक्रान्तौ तु ग्रहस्य विम २८ २६ २८ २५, ३२ २६ ण्डलस्थत्वेन परमगमनाभावाज्जि ३० ३८ ०० ३० ०० ३० नांशमिति परक्रांतिवशतो यनबलानयनं नितरामयुक्तमेवेति पूर्वः पक्षः॥ उच्यते॥ किं भवता जिनांशमितक्रान्तिपठितशरयोगेन या स्पष्टक्रान्तिः सा परक्रान्तिशब्देनोच्यतेऽथवा प्रतिगोलमत्यधिका या स्पष्टक्रान्तिः सा परक्रान्तिशब्देनोच्यते। नाद्यः पक्षः। चन्द्रस्य बलसंपूर्णत्वाभावयोः सततं व्यभिचारात्कदाचिदव्यभिचाराच्च। भौमादीनां वर्षशतैरनेकैः संपूर्णबलालाभाच्च। तथाहि। यदाऽयनांशोननवराशिसमश्चन्द्रः पातस्त्वयनांशसमस्तत्र चन्द्रशरः पठितशरतुल्यः परम ४। ३० क्रान्तिर्जिनांशमिता २४ एतत्संस्कारेजाता परक्रान्तिरष्टाविंशत्यंशाः सार्द्धाः। २८। ३०। अतस्तदैव संपूर्णं बलम्। यदा तु दक्षिणगोलेसप्तविंशतितुल्या परक्रान्तिश्चन्द्रस्य तदापि परमगमनात्संपूर्णबलेनावश्यं भवितव्यम्। भवन्मते सार्द्धगजाश्विमितक्रान्तिव्यतिरिक्तस्थले सम्पूर्णं बलं नायातीति दक्षिणगमनपरमत्वेपि संपूर्णंब-

लनास्तीतिनितरामयुक्तः प्रथमपक्षः। नचतदानीपरमगमनमेव-
नास्तीतिवाच्यम्। नाडीमण्डलादुत्तरतोदक्षिणतोवागच्छतोग्र
हस्यपुनर्नाडीमण्डलाभिमुखगमनप्रवृत्तिजक्रान्तेः परक्रान्तिश-
ब्दवाच्यत्वात्। किञ्च। भौमादीनांपातीयद्वयनांशसमः स्यात्त
दाचन्द्रवत्सम्पूर्णंबलमपिकदाचित्स्यात्। अयनांशसाम्यंतुपात
स्यमन्दतरगतित्वाद्दिव्ययुगैवर्ष शतैरनेकैरपिनसंजाघटीतीति
भौमादीनांसंपूर्णबलंकथमपिनस्यादितिदूषणान्तरम्। नान्त्यः
तस्यद्विगुणत्वेनायुक्तत्वात्। तथाहि। एकस्मिन्नयनेयावतीप्र
परक्रान्तिस्तावत्येवचेदन्यस्मिन्नपिस्यात्तदातयोर्योगेकृतेद्विगुणैव
पूर्वक्रान्तिर्भवतीतिद्विगुणयापरक्रांत्यैत्याद्यनुपातः सार्थकःस्या
त्अन्यायनेतुपरक्रान्तिर्विलक्षणैवभवतीतिद्विगुणपरक्रान्त्यैत्यस्या
नुपातस्यानर्थक्यादसत्यचोद्वितीयोपि। नचायनद्वयेपियेपरक्रा-
न्तीतद्योगेनयद्द्विरूपं बलं तदेष्टस्पष्टक्रान्तिसंस्कृतपरक्रान्त्याकि-
मित्यनुपातोयुक्तइतिवाच्यम्। अयनद्वितयजपरक्रान्तिज्ञानस्य
दुर्गमत्वात्। अथवक्तव्यंयचस्पष्टक्रान्तेः परमत्वं सोयनसन्धिरि
तिप्रसिद्धेरयनांशानितपाताद्दित्यादिपाताधिकारोक्त्याचन्द्रादी
नामयनसन्धीसंसाध्यततस्ताभ्यांपरक्रांतिज्ञानं सुलभमिति।
पुनर्भवेदेवम्। यदिस्पष्टक्रान्तिवशादायनवीयांनयनमार्षं मूल
कंस्यात्। आर्षमूलकत्वाभावादेवपरमलाघविकैराचार्यैर्जिनां
शमितक्रान्तिरेवपरमायनस्थानमङ्गीकृतं तद्युक्तमेव। तथाचप-
राशरः। सायनांशग्रहभुजाराशीनिघ्नाब्धि ४५ भिःसुरैः ३३॥
सूर्यैः १२ हत्वाक्रमाद्राशिभागः स्यादनुपाततः॥ १॥ एवंरा
श्यादिकेयुञ्ज्यादर्काराद्यैर्ग्रहस्यच॥ २॥ राशित्रयमथोयुञ्ज्यान्मेषा
दिस्थेषुतेष्वथ॥ २॥ तुलादिस्थेषुराश्यादीँस्त्रिराशिभ्योविवर्ज
येत्॥ चन्द्रार्क्योर्विपरीतं स्यात्सदायुञ्ज्याद्बुधस्यतु॥ ३॥ भा

गोलत्वचिन्हिभिर्भक्तं ग्रहाणामयनंबलम् । रवेर्द्विगुणमेवं स्यादि-ति । अस्यायमर्थः । सायनांशग्रहभुजराशिप्रमितखण्डकैक्यं भोग्यखण्डाहतशेषांशत्रिंशदंशलब्धभागादियुक्तङ्कार्यं तत्त्रिंशद्भक्तं राश्यादिकं स्यात् एवं एवं राश्यादिकेषु सायनेषु सूर्यभौमगुरुशुक्रेषु मेषादिस्थेषु मकरसुराशिस्थानेराशित्रयंयोज्यं तुलादिस्थेषुतुप्राप्तराश्यादिकं राशित्रयाद्विशोधयेत् चन्द्रशन्योर्विपरीतंबुधस्यतुसर्वदायोज्यं ततस्तदंशानांत्र्यंशः षष्ठ्यंशात्मकमायनंबलंस्यात् । सूर्यस्यद्विगुणंकार्यमिति । अत्रोपपत्तिः । क्रान्त्यभावेग्रहस्यरूपार्द्धंबलंतत्स्थानबलाभावस्थानान्तरे चतुर्विंशतिक्रान्तिगात्मकैश्चिमिताय नराशयः सन्तीतिजिनांशैस्त्रयोयनराशयस्तदेष्टक्रान्त्याकिमित्यनुपातेनयेऽयनराशयस्तेक्रान्त्यभावस्थानादागताः । अपेक्षितास्तुबलाभावस्थानादितिसौम्यगोले सूर्यभौमगुरुशुक्राणामयनराशीनांत्र्यधिकत्वात्त्रिषुयोज्यायाम्येत्र्यल्पत्वात्त्रिषुहेयाः । शनीन्द्वोस्तुयाम्येयोज्याः सौम्येशोध्याबुधस्योभयतोप्युपचयात्त्रिषुयोज्यास्ततोयदिषडयनराशिभीरूपंतदेष्टैः किमित्यायनंबलंस्यादितियुक्तम् । अत्रभगवतापराशरेण शिष्यानुकम्पयाप्रतिराशिहमयनभागाद्यंप्रसाध्यप्रथमंद्वितीयाद्द्वितीयं तृतीयादपास्यत्रीणिखण्डान्युक्तानि । ततोऽनुपातेनायनभागसाधनंचोक्तमितिसर्वमनवद्यम् । नह्निनिरवयवहादशांशमिताक्रान्तिरेकराशौभवतीतिकिंचित्स्थूलमिदंकल्पान्तरत्वाददोषः । यदिषण्णितायनराश्यंशैः खाष्टेंदुप्रमितैः षष्टिकलातुल्यंबलंतदेष्टैः किमित्यत्रापवर्तनेनायनराशिभागानांत्रिभागः षष्ठ्यंशाद्यम्बलमितिजातम् । अतोयुक्तमुक्तं भागोलत्वत्रिभिर्भक्तमिति । परक्रान्त्यावयोऽयनराशयस्तदेष्टैः किमितिप्राग्दर्शितेऽनुपातेत्रिभिरपवर्तंकृत्वाऽतिसूक्ष्मंप्रकारान्तरं पद्धतिप्रकाशेमयोक्तम् । क्रान्तिभागगज ८ भा

गलब्धभादोनसंस्कृतगुणाःषडुद्धृताः ॥ सायनंबलमिदंभवेन्मुनि स्वंत्रमेवहिपराङ्गरोजगौ ॥ १ ॥ परागर्गोक्तप्रकारेणजिनांशमितायामेवपरक्रान्तौसंपूर्णंबलमागच्छतीतिस्पष्टक्रान्तिवशादाय-नवीयंसाधनं सूर्यादिकृतन्निरतामयुक्तमितिसिद्धान्तः । किञ्च । एकत्वनिर्णीतः शास्त्रार्थः सर्वत्रोपयुज्यतइतियायनबलवासना-सैवायनवलनस्येत्यायनवलनानयनेसिद्धान्त सुन्दरेत्वल्पिवाज्ञा-नराजेनस्पष्टक्रान्तिर्नादृताऽथचटीका यांत्वस्मद्दजेनचिन्तामणिनापिनादृतातस्ताभ्यांमहद्विरोधोपिमहद्दूषणम् । तस्माच्चरसं-स्कारोत्ययुक्तएव । अतएवायनवंशेनवलनमायनवलनमितिप्र-सिद्धिरयन सङ्केतस्योऽगपागयनेमृगकर्किणोरितिचक्रतरवाच्चरसंस्कारोनयुक्तएव । एवंजातकपद्धतावायनबलेपिबोध्यम् । एकत्वनिर्णीतः शास्त्रार्थः सर्वत्रोपयुज्यतइत्यानशब्दस्यतत्रापिस-त्वादितिवार्तिककृदुक्तिरपिसङ्गच्छते । क्रान्तिसाधनेनशिष्याः क्लिश्येरन्नितितांविनाप्यायनवलानयनं पद्धतिप्रकाशेमयोक्तम् । अन्यत्रयोः सायनभादिकस्यकोत्युत्क्रमज्याङ्घ्रि ४ तदूनषष्टिः गोलक्रमाद्यस्तमथापरेषांयाम्येतुचान्द्रेः खरसच्युतस्वा ॥ १ ॥ अत्रकोत्युत्क्रमज्याखार्कं १२० त्रिज्याप्रमाणेनग्राह्येत्यभिसन्धिशेषं स्पष्टम् । वासनातु । यदित्रिज्यातुल्ययासायनग्रहदोर्ज्य-याजिनज्यातुल्यापमज्यालभ्यतेतदेष्टयाकिमिति जाताक्रान्ति-ज्या इयंहिभक्ताक्रान्त्यंशाभभेयुः तेचपञ्चगुणास्त्रतुर्भक्ताः फलंपूर्णगुणेषुसंस्कार्यंतदायनं भवतीतिप्रागुक्तम् । अत्रगुणघातोगु-णः २४ ३ । ४५ हरघातोहरः ९६० एतौगुणेनापवर्त्यस्वल्पाक्षरत्वाद्धरेचतुरोगृहीत्वादोर्ज्यांङ्घ्रि संस्कृता स्त्रिंशदायनबल-मितिपर्य्यवसितम् । तत्रशनीन्दोः सौम्यगोलेयोगोन्तरंतुल्यह-रांशकानामित्युक्तेदोर्ज्याचतुर्थांशस्त्रिंशत्सुसमच्छेद विधानेनशो-

ध्यः । समच्छेदेतुकृतेखगुणस्थानेत्रिज्याजाता । ततोदोर्ज्यांशो-
धिताजाताकोट्युत्क्रमज्या । यतोभुजज्योनात्रिज्याकोट्युत्क्रम-
ज्येतिसिद्धान्तेप्रसिद्धतरम् । तस्मात्कोट्युत्क्रमज्याङ्घ्रितुल्यंसौ
म्येत्रबलमितियुक्तम् । याम्येतुदोर्ज्याङ्घ्रिस्त्रिज्याचतुर्थांशयोज्य-
स्तत्रदोर्ज्यायाः खण्डद्वयम् । एकंकोट्युत्क्रमज्यातुल्यमृणगतम्।
अपरंत्रिज्य तुल्यंतत्रत्रिज्याद्वययोगस्तुभंक्तोजाताषष्टिः । अतः
कोट्युत्क्रमज्याङ्घ्रूनाषष्टिर्बलमित्युपपन्नम् । शेषं सुगमम् ।
प्रकृतमनुसरामः । अर्कस्यदृगघ्नमित्यत्रोपपत्तिः सारावल्याम् ।
सूर्येन्दुपुनरुत्तरेणबलिनौसत्योक्तचेष्टाबले । सूर्यउत्तरेणायनेन-
गमनेनचेष्टामूलकबलवान् । परमोत्तरगमनेरवेरत्यविपुलतेज-
स्त्वलक्षणचेष्टाशालित्वात्सम्पूर्णंबलम् । दक्षिणगमनसमाप्तौवि
पुलमन्दतेजस्त्वलक्षणचेष्टाभावशालित्वाद्बलाभावः । गमनक्रा
न्तिवशादेवेतिक्रान्त्याअनुपातेन्यायेनायनवीर्यंतुल्यमेवेदंचेष्टा
बलंजातमतोरवेरायनवीर्यंद्विघ्नंकृतं तद्युक्तमेव । अयनस्यगमन
क्रियारूपस्यचेष्टाशब्दवाच्यत्वादिदमपिचेष्टाबलमेवेतिज्ञेयम् ।
अथभौमादीनांद्वितीयंचेष्टाबलंवृत्तार्द्धेनाह ॥

**मध्यस्पष्टयुतेर्दलोनितचलंचेष्टाख्यके-**
**न्द्रंकुजात्स्यात्तच्चेद्भगणाच्च्युतंषडधि**
**कंषड्हृच्चचेष्टाबलम् ॥**

मध्यस्पष्टग्रहयोर्योगार्द्धेनऊनितश्चलं शीघ्रोच्चंकुजमारभ्यचे
ष्टाकेन्द्रंस्यात् । तच्चेत्षड्राशिभ्योऽधिकंतदाद्वादशराशिभ्योवि-
शोध्यं ततः षड्भक्तंसच्चेष्टाबलंस्यादित्यर्थः । चशब्दोत्रतुङ्गवांजां

नयनेयोभजनविधिः सएवावधार्यइतिज्ञापनार्थम् । मध्यस्पष्ट विवृद्धिहानिदलभाङ्मध्योनशैघ्र्यङ्कुजादितिपाठेव्याख्या । मध्यस्पष्टे याविवृद्धिराधिक्यंहानिर्न्यूनतावातयोर्दलंभजतिसतथास चासौमध्यश्वतेनऊनंशैघ्र्यमुच्चकुजाचेष्टाकेन्द्रंस्यात् । एतदुक्तंभवति । मध्यस्पष्टयोरन्तरंकार्यंतदर्द्धं मध्येसंस्कार्यंयदिमध्यात्स्पष्टो ऽधिकस्तदान्तरार्द्धं मध्येदेयमन्यथाहेयमिति । ताहृशोमध्यमश्चलोच्चाच्छोध्यश्चेष्टाकेन्द्रंस्यात् अस्मात्पाठात्प्राक्प्रदर्शितएवपाठोवरीयांगणितलाघवात्सत्वरमर्थावबोधाच्च । आचार्येणापिस्वकृतटीकायांमध्यस्पष्टयुतेर्दलोनितमितिपाठोलिखितोस्ति । अचमध्यस्पष्टयोर्भेदादशाधिकेदादशभिस्तत्त्वणं नकार्यमितिबोध्यम् । अत्रोपपत्तिर्न्दहज्जातके । उदगयनेरविशीतमयुखौवक्रसमागमगाःपरिशेषाः । विपुलकरायुधिचोत्तरसंस्थाश्चेष्टितवीर्ययुताः परिकल्प्याः । वक्रसमागमगाः समागमः संबन्धस्तेनवक्रसंबन्धंप्राप्तावक्रगाइतियावत् । परिशेषाभौमादयश्चेष्टाबलयुताः स्युर्यतोविपुलकराविपुलबिम्बाइतियावत् । लघुजातके । वक्रान्येस्निग्धविपुलाश्चे ति । समागमपदंत्यक्त्वैवोक्तंतेन । वक्रगास्तथासमागमगाश्चन्द्रसहिताबलिनइत्युत्पलव्याख्यानसाध्वी । अत्रविपुलकराइतिचेष्टितवीर्ययुताइतिवचनादस्यबलस्यावश्यंचेष्टैवमूलम् । साचचेष्टापरमविपुलविम्बतारूपापरमवक्रगतिस्थानेषड्भाशितुल्येचलकेन्द्रे । शून्यसमेशीघ्रकेन्द्रेपरमसूक्ष्मविम्बतारूपश्चेष्टाभावः । अतः शीघ्रकेन्द्राख्ये वचेष्टाकेन्द्राणिषड्भाशितुल्यशीघ्रकेन्द्रे रूपंसंपूर्णंबलंशून्यतुल्येबलाभावः । अन्तरेतु यद्विषड्भाशितुल्ये नचेष्टाकेन्द्रेण रूपंबलंतदेष्टषडल्पचेष्टाकेन्द्रेण किमित्यनुपातेनबलानयनंयुक्तम् । अत्राचार्यैः शीघ्रकेन्द्राख्ये-वचेष्टाकेन्द्राणीतिसुगमंविहाययत्फलदयार्द्धसंस्कृतमध्योनंचलो

स्वंचेष्टाकेन्द्रंस्यादित्यङ्गीकृतंतत्रोपलब्धिरेववाना । अथफलद्वया र्द्धसंस्कृतमध्ये नोनंचलोच्चंकिलचेष्टाकेन्द्रम् । तत्रप्रकृतिफलद्वय-सञ्जातंतत्साध्यते । मध्यस्फुटान्तरंफलद्वयम् । यतोमध्यः फल द्वयसंस्कृतः स्पष्टोभवति । तदर्द्धेनसंस्कृतोमध्यश्चलोच्चाच्छोध्य-श्चेष्टाकेन्द्रंस्यात् । अतोमध्यस्पष्टविवृद्धिहानिदलभागित्युपपन्न-म् । यद्वा । विपरीतफलद्वयार्द्धसंस्कृतचलोच्चादेवमध्यः शोध्य-श्चेष्टाकेन्द्रंभवति । तथाचश्रीपतिः । मध्यस्पष्टद्युचरविवरार्द्धेनयु तोच्चलोच्चान्मध्येस्पष्टादधिकवपुषिन्यूनकेवर्जिताच्च । जह्यान्मध्य ध्यग्रहमितिचभवेत्तच्चचेष्टाख्यकेन्द्रमिति । अत्रजह्यात्स्पष्टग्रह-मित्यपपाठः । बहूनामसमतत्वात् । अत्राचार्यैः क्रियोपसंहा-रंकृत्वामध्यस्पष्टयुतेरितिपाठान्तरमुक्तं तत्रयुक्तिर्मध्याधिकेस्पष्टे तावदुच्यते । मध्योनः स्पष्टः फलद्वयंतदर्द्धं फलद्वयार्द्धंजातमेतर (म १ स्प १) न्मध्यसमच्छेदविधानेनयोजितंजातंमध्यस्पष्टयो-

२

गार्द्धम् । म-स्प यो १ अतोमध्यस्पष्टयुतेर्दलमित्यनेनफलद्वया

२

र्धसंस्कृतोमध्यइतिसाधितभवति । एवंमध्योनेस्पष्टेयोज्यम् । अनेनहीनंचलोच्चंचेष्टाकेन्द्रंस्यादत्रकिंचित्रम् । अतःसर्वमुपपन्न-म् । इदानीनिसर्गबलमाह ॥

स्यादेकोत्तररूपमद्रिविहृतंनैसर्गिकं
स्याद्बलंमन्दारज्ञसुरेज्यशुक्रशशभृत्सूर्य
द्युतीनांक्रमात् ॥

स्यादितिपूर्वेणान्वयः एकोत्तरंरूपमद्रिविहृतंसप्तभक्तंसन्म न्दादीनांक्रमान्नैसर्गिकंबलंस्यात् । एकउत्तरोऽधिकोयस्यतत्त-

था। तच्चतद्गतंचएकादशरूपम्। एकादिसप्तान्ताअङ्काः सप्तभक्ता। नैसर्गिकंबलंस्यादितिनिष्कृष्टोऽर्थः। अत्रोपपत्तिर्ब्रह्मजातके। शशिबुधगुरुशुक्रराद्याइत्युक्तिवीर्यवन्तः। अत्रशादिभिराद्याद्यैरुपलक्षिताः अन्यादृग्योग्यग्रहात्प्रवृत्तितोऽबलिनः स्युः। अत्रसर्वापिग्रहारवेः संपूर्णबलंसंपूर्णतारूपात्मिकेतिरूपंबलम्। अतोरूपसप्तमांशः शनेर्बलमेवंसप्तांशोपचयाङ्कोसप्तमप्तांशद्वयमेवंबुधादीनांनिसर्गबलमुपपन्नम्। एतद्बलंकदापिनक्षीयतेनाप्युपचीयतेसर्वदासममेवेतिनैसर्गिकबलमित्यस्यनामश्रुतंपराशरादेः। नैसर्गिकंस्वाभाविकमितियावत्। अत्रपुस्तकेषुस्यादेकोत्तररूपमित्यस्याग्रेस्ययुद्धे बाणवियोगहृदित्यर्द्धात्प्राक्लिखनंलेखकभ्रमजंद्रष्टव्यम्। अन्यथासभेदस्यचेष्टाबलस्यानभिधानात्मध्यएवनिसर्गबलाभिधानेअर्थान्तरंस्यात्। यद्वायौद्धबलस्यकादाचित्कत्वाद्वयोरेवयोगेचेष्टाबलंबहुधाभवतीतितस्यचोक्तत्वान्निसर्गबलमुक्तमितिनकिंचिद्विरुद्धम्। अथयुद्धजबलाख्यंभौमादीनांतृतीयचेष्टाबलमाह॥

युद्धे बाणवियोगहृत्खचरयोर्वीर्यैक्य
योरन्तरंस्वंसौम्यस्यबलेक्षयंचयमदिक्
सस्थस्यकुर्याद्बले॥

खचरयोस्ताराग्रहयोर्युद्धे सति वीर्यैक्ययोर्युद्धजबलातिरिक्तसर्वबलैक्ययोरन्तरंरूपादिवाणयोः कलात्मकत्वादस्वाभिमुखशरयोगेनहृद्भक्तं सद्युद्धबलंस्यात्तत्सौम्यस्यसोत्तरदिक्स्थितग्रहस्य

बलीस्य धनंकुर्यात् । यस्मदिक्संस्थस्यबलेचयस्तृणकुर्यात् । गणक
इतिशेषः । शरान्तरंतुसमदिशोः शरयोरन्तरेणभिन्नदिशोर्योगे
नभवति । यस्योत्तरः शरः सउत्तरदिक्स्थोग्रहोदक्षिणशरोदक्षि
णदिक्स्थः । दिक्साम्येयस्याल्पशरः सोऽन्यदिक्स्थइतिज्ञेयम् ।
ननुकिंनामयुद्धतच्चकेषांभवतीतिनजानीमइतिचेत् । उच्यते ।
समागमाभावेसतिस्पष्टग्रहयोराश्यंशकलासाम्यमेवयुद्धम् । के
वलंराश्यंशकलासाम्यमेवयुद्धमित्युक्तेसमागमेपिस्पष्टग्रहयोराश्यं
शकलासाम्याद्युद्धलक्षणमतिव्याप्तमतस्तद्वारणायसत्यन्तम् । भि
न्नराशिस्थत्वेपिसमागमाभावाद्युद्धलक्षणंमाप्रसाङ्क्षीदितिराश्यं-
शकलासाम्यमित्युक्तम् । नन्विदंलक्षणमयुक्तम् । परमास्तमयेस
मागमाभावेसतिस्पष्टग्रहयोश्चन्द्रादिषट्कान्यतरसूर्ययोराश्यंश
कलासाम्यस्यसत्वेनातिव्याप्तिः ।

सूर्येणास्तमयः सहेतिसूर्यसिद्धान्तोक्तिविरोधाच्च । तस्मात्सम
मागमपरमास्तमयाभावकालीनस्पष्टग्रहराश्यंशकलासाम्यमे-
वयुद्धमितिवाच्यम् । तथासतिलक्ष्णाप्यतिव्याप्तिः । नच्चघटसत्वे
पिघटपटौनस्तइतिप्रतीतेर्व्यासज्यवृत्ति प्रतियोगिताकोभावोऽ-
वश्यंस्वीकरणीयः । तथाचसमागमेसमागमाभावाभावेपिसमाग
मपरमास्तोभयाभावादेवपरमास्तमयेपरमास्तमयाभावाभावेपि
समागमपरमास्तोभयाभावाद्राश्यंशकलासाम्याच्चयुद्धलक्षणंतत्रा
प्यतिव्याप्तमितिवाच्यम् । समागमस्यपरमास्तमयस्यचप्रतियोगि
नः सत्वेनतत्रतदभावानभ्युपगमात् । तथासतिपूर्वलक्षणमसं-
गतमितिचेत् । मैवंवोचः । स्पष्टग्रहयोरित्यत्रभौमादिपञ्चका-
न्यतमयोः स्पष्टग्रहयोरित्यर्थस्यविवक्षितत्वात् । परमास्तमयेस
मागमस्यसिद्धासिद्धिभ्यांनिषेद्धमशक्यत्वाच्च । समकक्षयोस्तारा
ग्रहयोः सूर्यसांनिध्यवशेनास्तमयेपुत्रशङ्काव्युदासार्थमस्ताभाव-

कालीनमिति विशेषणं देयम् । केचिदायनदृक्कर्मग्रहेषु देयमित्या हुस्तद्वारणायवास्तवपदमपि देयम् । तथाचसमागमास्ताभावका-लीनं भौमादिपञ्चकान्यतमयोर्वास्तवस्पष्टग्रहयोराश्यं शकलासाम्यमेवयुद्धमितिफलितम् । ननुभेदयोगान्ययोगेदृक्कर्मदेयमित्युक्तेर्दृक्कर्मदानमावश्यकं तथासतिनदेयमितियदुक्तं तदयुक्तमितिचेन्न । यद्यपिकतिपयैर्दृक्कर्मणियुतिःसाध्यतेसापिभवतीतिभाष्येभास्कराचार्यैरुक्तत्वात् । परं यायुतिरायातिमाकदम्बाभिमुखीलौकिकदम्बप्रसिद्धतायोरभावाद्दृष्टुः प्रतीतिर्नोत्पद्यतद्दूतितत्रदृक्कर्मदेयमेव-प्रकृतेतुबलानयमेद्रष्टुः प्रतीतेरनपेक्षितत्वाद्दृक्कर्मव्यर्थम् । अत-एवाहुर्मिश्राः । वास्तवस्पष्टखेटानामिति । चन्द्रादीनांसूर्येणसंयोगोऽस्तमनसंज्ञः । भौमादीनांचन्द्रेणसंयोगः समागमशब्दवाच्यः । भौमादीनांपरस्परसंयोगः कदाचित्समागमः कदाचिद्युद्धम् । तदुक्तं सूर्यसिद्धान्ते । ताराग्रहाणामन्योन्यंस्यातांयुद्धसमागमौ । समागमः शशाङ्केनसूर्येणास्तमयः सहेतिताराग्रहाणातारकाराणांग्रहाणां भौमादीनांपञ्चानांयुद्धं समागमस्वद्वा--वेतीभवतः । तत्रयुद्धभेदाश्चत्वारः । तथाचवराहः । आसन्नक्रमयोगाद्भेदोल्लेखांशुमर्दनासव्यैः । युद्धस्तुः प्रकारं पराशराद्यैर्मुनिभिरुक्तम् । लक्षणानिसूर्यसिद्धान्ते । उल्लेखस्तारकास्पर्शेभेदेभेदः प्रकीर्त्यते । युद्धमंशुविमर्दाख्यमंशुयोगेपरस्परम् । १ । अंशादूनेपसव्याख्यंयुद्धमेकोत्रचेदणुरिति । अंशादूनेन्तरेयदाद्वावपिस्वल्पबिम्बौतदाकूटविग्रहाख्योभेदः । अयमपिभेदः पराशरेणापसव्याख्यभेदान्तर्गतएवकृतः । अंशादूनेऽन्तरेउभावपिपृथुबिम्बौतदासमागमएवापसव्याख्ययुद्धम् । अतएवतत्रोक्तम् । आसन्नावप्युभौदीप्तौभवतस्तौसमागमेद्भूति । अंशाधिकेन्तरेयदा द्वावपिपृथुबिम्बौतदासमागमरावनकूटविग्रहः । समागमोंशा-

दधिकेभवतस्तद्दलान्वितौइति । अत्रबलशब्देनस्थानादिबलंनग्राह्यंकिंतुबिम्बस्थौल्यरूपंरूपबलमेवग्राह्यमितिब्रह्मसिद्धान्तेउक्तम् । स्थानादिबलचिन्तात्रव्यर्थाकेनापिनस्मृता । प्रश्नत्रयेऽथवाप्यसितस्थौल्यसौक्ष्म्यबलंस्मृतमिति । सूर्यसिद्धान्तटीकायांचोत्पलभट्टेनाप्येवमेवव्याख्यातम् । अंशादधिकेऽन्तरेयदाद्वावपिस्वल्पौतदाकूटविग्रहरावनसमागमः । अंशान्यूनेऽन्तरेपियदाद्वावपिस्वल्पौतदाकूटविग्रहराव । अतएवाविशेषेणोक्तम् । स्वल्पौद्वावपिविध्वस्तौभवेतांकूटविग्रहइतिफलितोयमर्थः । तारकास्पर्शेनिमित्तेउल्लेखाख्यं युद्धंतारकाभेदेनिमित्ते भेदाख्यंयुद्धम् । अंशुयोगेनिमित्तेऽंशुविमर्दाख्यंयुद्धम् । अंशादूनान्तरयोर्ग्रहयोरेकस्याणुत्वेनिमित्तेपऽसव्याख्यंयुद्धंद्वयोरणुबिम्बत्वेकूटविग्रहाख्यं युद्धंद्वयोः पृथुबिम्बत्वेनिमित्तेसमागमरावनयुद्धम् । अन्ययायुद्धसमागमसंकरइतिभौमादिपरस्परयोगस्यसभेदाभवन्तीत्याहुर्वासनावार्तिकप्रणेतारोऽस्मत्पितृचरणान्नृसिंहदैवज्ञाः इदमत्रावधेयम् । शरयोगविभागात्मकेग्रहान्तरेमानैक्यखण्डतुल्येतारकास्पर्शस्तन्न्यूनेतारकाभेदोमानैक्यार्द्धादधिकेशार्धान्न्यूनेऽंशुविमर्दः । आराद्ंशार्धमंशूनांव्याप्तिरितिब्रह्मसिद्धान्तोक्तेः । ग्रहान्तरेऽंशादधिकेऽंशादूनेसत्येकस्याणुत्वेपसव्याख्यं युद्धं द्वयोरणुत्वे कूटविग्राख्यम् । अंशादूनेऽधिकेवान्तरेद्वयोरणुत्वेकूटविग्रहोद्वयोः पृथुबिम्बत्वेसमागमएव । शीघ्रकर्णेत्रिज्याधिकेऽणुबिम्बत्वंत्रिज्याल्पेपृथुबिम्बत्वमिति । अत्रयुद्धपदोपादानात्समागमादौनायंसंस्कारइतिबोध्यम् । एवंत्र्यादीनामपियुद्धेद्वयोर्द्वयोर्ग्रहयोर्युद्धवत्व्यतिरिक्तसर्वबलैक्ययोरेवान्तराद्ग्रहान्तरेणफलमानीययथोक्तवत्संस्कारः कार्यः अत्रग्रहेआयनदृक्कर्मसंस्कारेनतिसंस्कारस्तदनुयष्ट्याद्युचरविमिस्वस्ताडितस्त्रिज्ययाप्तइत्यनेनस्पष्टताचनकार्या ।

प्रयोजनाभावात्। अथोपपत्तिरुच्यते। बृहज्जातके। विपुलक-
रायुधिचोत्तरसंस्थाश्चेष्टितवीर्ययुताः। परिकल्प्याद्वृति। परि
शेषाद्वृत्यनुषङ्गः। रवीन्द्वोश्चेष्टाबलस्योक्तत्वात्परिशेषाभौमाद्द-
योयुद्धेउत्तरसंस्थाश्चेष्टाबलयुताःस्युः। यतोविपुलकराद्वृतिचेष्टाब
लहेतुभूतचेष्टोपन्यासः ग्रहयुतावुत्तरस्थस्यजयवशाच्चेष्टाधिक्यं-
दक्षिणस्थस्यपराजयवशाच्चेष्टाह्रासस्तदिहे तरस्यस्यजयवशाद्बले-
याबल्याधिक्यंतावान्नैवपराजयवशाद्दक्षिणस्थस्यबलेह्रासद्वृतिसि-
द्धम्। कैं कैंनचिद्दक्षिणस्थस्यापिजयउक्तस्तन्मतमत्रनगृहीतं।
बृहज्जातकेउत्तरसंस्थाद्वृति विशेषोक्तेः। अथलोकेसमबलयोर्ज-
यः पराजयोनास्ति। तयोरेकस्यषष्ट्यंशमात्राधिक्येस्थूलदृष्ट्यासा
म्येपिसूक्ष्मदृष्ट्याषष्ट्यंशमात्रोजयः पराजयश्चास्तीतिबलान्तरतु
ल्योजयः पराजयश्चपर्यवसितः। बलंत्वत्रसामान्याकारेणसर्वमे-
वागतंपरन्तुबलान्तरमेवजयपराजयविचारस्यप्राप्तत्वादितरेत-
राश्रयभीत्यैतदतिरिक्तसर्वबलैक्ययोरन्तरंबहुयुद्धेपिन्याय्यम्।
यदत्रगणेशेनपूर्वंप्रदिष्टबलसकलनं विदित्वेतिवदतानन्तरंप्रदि
ष्टं द्वन्द्वजंनयोजिततद्दतोवतुच्छमित्यवगच्छ। अत्रसर्वेषांकलाप
र्यन्तमेवधावनात्कलातोऽल्पे ग्रहान्तरेऽन्तराभावलक्षणांसाम्यमे-
वेतिमिश्राः प्राहुः। ततोत्रपद्धतौयत्रकलाव्यवहारस्तत्रस्फुटय-
द्वयोः साम्येशरसाम्येचैककलातोल्पेन्तरेसाम्यमेवेतिफलितम्।
एवंसतिबलान्तरतुल्यःपरमोजयःपराजयश्चयुद्धस्यपरमोत्कर्षेपर
मसान्निध्येशरयोरन्तराभावलक्षणेसाम्येसमुचितः। परमिहश-
रयोरेककलातोन्यूनेन्तरेयथोक्तान्तराभाव लक्षणसाम्याद्ग्रास्यो-
दकस्यत्वव्यवहाराभावेनजयाभावात्संस्काराभावएव। ततः शर-
योः कलासाम्यान्तरेयाम्योदक्स्थताप्रवृत्तेस्तत्रबलान्तरतुल्योज-
योऽजयश्च। अत्रानुपातः। यदिकलामात्रेणग्रहान्तरेणबलान्तर-

तुल्यंबलंप्राप्यतेतदैकबलादिनाग्रहान्तरेणकिमिति । अत्रसांनि-
ध्यापकर्षेबलापकर्षादिच्छावद्दोफलेह्रासादितिव्यस्तत्वे राशिके-
णबलान्तरस्यकलादिग्रहान्तरंहरः फलमुदक्स्थस्यजयोक्तेस्तस्य
बलेयुक्तं दक्षिणस्थस्यपराजयोक्तेस्तद्बलेहीनंकर्तव्यमितियुक्तम् ।
एवंसभेदंचेष्टाबलंव्यवस्थाप्येदानींदृग्बलमाह ॥

# सद्दृष्ट्यङ्घ्रियुगुग्रदृष्टिचरणोनंखेटवी र्यंभवेत् ॥

प्रागानीतंवीर्यंसतांशुभग्रहाणांप्रागानीतदृष्टीनामङ्घ्रि-
णाचतुर्थांशेनरूपादिनायुक्युक्तंकार्यम् । उग्राणांपापानां-
दृष्टिचरणेनोनंकार्यम् । एवंकृतेसतिखेटवीर्यंभवेत् । जातावे-
कवचनम् । तेनखेटवीर्याणिभवेयुरित्यर्थः । युताशुभदृष्टियोग-
चतुर्थांशपापदृष्टियोगचतुर्थांशयोरन्तरंधनमृणंदृग्वीर्यंस्यात् । शु-
भदृष्टियोगचतुर्थांशात्पापदृग्योगतुर्यांशेशुद्धेशेषंधनगतंदृग्बलमि-
तरथार्णमितिवेद्यम् । ततः षण्णांबलानांयोगेकृतेषड्बलैक्यंतदे-
वात्रसर्वत्रबलशब्देनव्यवह्रियते । अत्रोपपत्तिः । लघुजातकेब-
लवान्मित्रस्वगृहोच्चनवांशेष्वीक्षितः शुभैश्चापि । शुभैर्दृष्टोग्र-
होबलवानर्थात्पापदृष्टोनिर्बलइति । अत्रेन्दोः सर्वदैवशुभत्वाद्बु-
धस्यचशुभत्वेचत्वारः शुभाः स्युः पापत्वेचत्वारः पापाः । य-
दिचत्वारः शुभाः पापावासंपूर्णदृष्ट्यापश्येयुस्तदारूपतुल्यंदृग्ब-
लंधनमृणंचक्रमेणोचितम् । अतोनुपातर्यदिचतूरूपमितयासर्वं
दृष्ट्यारूपं तदानेनदृष्टियोगेनकिमितिशुभदृग्योगस्यपापदृग्योग-
स्यचचतुर्थांशः क्रमेणधनर्णंदृष्टिबलमितिनिष्पन्नम् । इदानींभावा
नांद्विविधबलमाह ॥

**भावानांबलमीशजंचनृचतुष्पादाख्यकीटाम्बुजाः । जायाम्ब्वाद्यखभोनिता खलुततोदिग्वीर्यंवत्तद्युतंसदृष्टाङ्घ्रियुगुग्रदृष्टिचरणोनंज्ञेज्यदृग्युक्पुनः ॥**

अस्यायंतात्पर्यार्थः । भावानांस्वामिबलमेवबलमेकम् । चपुनर्नृचतुष्पादाख्यकीटाम्बुजाः । नरचतुष्पात्कीटजलचरवराशयोभावाः सप्तमचतुर्थतनुदशमभावैरूनिताः यदिषड्भाधिकास्तदाचक्रशुद्धाः १२ षड्भाल्पायथास्थिताएवषड्भक्ताः फलंदिग्बलंद्वितीयम् । अनेनदिग्बलेनस्वामिबलंयुतंकार्यंसबलद्वययोगोभवेत्शुभग्रहदृष्टियोगचतुर्थांशपादृगैक्यचतुर्थांशयोरन्तरंप्राग्वद्धनर्णंदृग्बलम् । तद्बुधस्यगुरोस्समग्रयादृशायुतंकार्यम् । यदिग्रहबलसाधितंदृग्बलंधनगतंतदातत्रबुधगुरुदृष्टियोगोयोज्यःचेदृणंतदाबुधगुरुदृग्योगेनसहान्तरंकार्यंशेषसमंदृग्बलंस्यात् । दृढंतृतीयम् । त्रयाणांयोगेभावस्यबलंस्पष्टंभवति । अत्रमत्पद्धतिप्रकाशे । अथत्रिधाभावबलंवदाभिस्वस्वामिवीर्यंबलमुक्तमेकम् । नभोगनवतदृष्टिबलंद्वितीयंसमग्रचान्द्रीज्यदृगैक्ययुक्तम् ॥ १ ॥ धनाभिधासौम्यदृगुग्रदृष्टिऋणाभिधैक्येधनयोस्तुयोगः । धनर्णयोरन्तरमेवयोगस्त्वेवंविदित्वायुतिरत्रकार्या ॥ २ ॥ नृकीटपश्वम्बुचराणिभानिजायाद्यवेश्माम्बरभोनितानियथाषडल्पानिखवीकृतानित्रिभिर्विभक्तानिबलानितानि । ३ ॥ अत्रोपपत्तिः । सारावल्याम् । लग्नाधिपेनतुल्यंबलमिहचूडामणिर्वदति । लग्नमित्युपलक्षणंतेनभावेशबलमेवभावबल-

सित्यर्थः। अतोयुक्तमुक्तं भावानांबलमीशजमिति। नरचतुष्प-दादिराशयः के। तच्चकस्यादिदिशि बलिनइतिभगवतागर्गेणोक्त-म्। नृयुक्तलाघटः कन्यापूर्वमर्द्धंचधन्विनः। लग्नस्थावलिनो-नित्यमेतेद्विनरराशयः। १। चतुर्थेकर्कटोमीनोमकराद्धंचपश्चि-मम्। विज्ञेयावलिनोनित्यमेतेद्विजलराशयः। २। सप्तमेवृ-श्चिकः कीटोबलवान्परिकीर्तितः। धन्वर्द्धाद्विजगोसिंहावलिनः खेचतुष्पदाः॥ ३॥ इति। अत्रार्द्धशब्देनावशिष्टोमकरपूर्वा-र्द्धोबोध्यः। नरचतुष्पदादिराशीनांप्रोक्तदिशिसंपूर्णबलंततः सप्त-मेवलाबलस्तदन्तरेऽनुपातेनबलानयनस्यखचरदिग्बलवद्भासना। अत्रगणेशनाम्नाकुम्भोत्तार्द्धं मानुषं पूर्वार्द्धं चतुष्पदमित्युक्तम्। अन्यंनतुसंपूर्णः कुम्भोजलचरइत्युक्तम्। तदुभयमपिगर्गपराश-रादिविरोधात्प्रत्याख्येयम्। किञ्च। पराशरेणकर्कवृश्चिकौकी-टावित्युक्तन्तदपिनादरणीयम्। बहूनामसम्मतत्वात्। कर्कौ-जलचरोवृश्चिकः कीटइति सर्वसम्मतम्। अथशुभदृष्टोराशिर्व-लवान्पापदृष्टोनबलवानितिशुभदृष्टेः पापदृष्टेश्चतुर्थांशोयोज्यो-वियोज्यश्चक्रमेणेदंप्रागुपपादितमेव। बुधजीवनिरीक्षितोराशि र्बलवानितिलघुजातकाद्गौबुधजीवदृष्टेर्विशेषेणपुनरुपात्तत्वात्स मग्रबुधदृष्टौसंपूर्णजीवदृष्टौचसंपूर्णं रूपं बलमितिदृष्टिरूपेबले-जातेगणितागतयासकलयाबुधदृष्ट्याजीवदृष्ट्याचयुतं कार्यमि-ति सर्वंपरिच्छिन्नम्। यत्तु। नरराशीनांगुरुशुक्रयोस्त्रिकोणत्वं बुधस्यचगृहत्वमितिप्रत्यक्षसिद्धमेवातस्तेषां रूपंबलंवृश्चिकराशौ बलाभावः। यतानीचत्वाच्चन्द्रस्यबलशून्यत्वमित्यादियुक्तिर्म-न्दानन्दकरीसूर्येण गर्गादिमुनिग्रन्थापटुनाम्नीपद्धतिपद्धतिवृत्तौ प्रतिपादितासानितरामयुक्तेतिबोध्यम्। वृश्चिकेचन्द्रस्यबलाभा वाल्लग्नस्यापिबलाभावेन भाव्यमितियोब्रूयात्सकस्योपहास्योन-

स्यात् । यद्यत्रागमएवप्रमाणन्तदाकिमनेनत्वयायुक्तिलिखनेन । अत्रशास्त्रेसर्वत्रागमएवप्रमाणन्तथापिसद्युक्तिश्चेत्स्फुरितासाले ख्या । तस्माद्ग्रन्थानभिज्ञानांयत्किञ्चिद्युक्तिंप्रतिपादयतां तत्त्वकरणव्यसनमायुष्मतांवृथैव । अथोत्तरार्द्धे नरवोङ्गोश्चेष्टाबलसाधनमाह ॥

**व्यर्कोन्दुस्त्रिभयुक्तसायनरविश्चेष्टाख्यके-**
**न्द्रेतयोर्गोक्रष्टेष्टविधौबलेकुरुततःप्राग्व-**
**न्नवीर्यायते ॥ १२ ॥**

सूर्योनश्चन्द्रश्चन्द्रस्यचेष्टाकेन्द्रंस्यात् । राशित्रयेणायनांशैश्च युतोरविः सूर्यस्यचेष्टाकेन्द्रम् । ततस्ताभ्यांकेन्द्राभ्यांप्राग्वद्भौमादिचेष्टाबलवद्भगणच्युतंषडधिकंषड्भृदित्यादिनातयोः सूर्याचन्द्रमसोर्बलेकुरुशिष्यनिमन्त्रणेलोट् । कस्मिन्विषयेइत्याशङ्कायामाह । गोक्रष्टेष्टविधावति । गावोरश्मयः । कष्टम् । इष्टंच प्रसिद्धम् । अनयोश्चेष्टाबलयोरश्मीष्टकष्टसाधने उपयोगोस्तीत्यर्थः । नवीर्याय । बलैक्येकर्तव्येनोपयोगइत्यर्थः । अतएवबलसमाम्नावेतच्चेष्टाबलमभिहितम् । अत्रोपपत्तिः । प्रागुदाहृतेसारावलीवाक्यरवेरुत्तरायणेचेष्टायाः प्रतिपादितत्वात्तरगमनारम्भेसायननवराश्यन्तेशून्यंचेष्टाकेन्द्रम् । परमोत्तरगमनेसायनराशित्रयान्तेषड्राशिमितंचेष्टाकेन्द्रंतत्तुराशित्रययोगेन भवतीतितथोक्तम् । परमिदंस्थूलम् । वस्तुतस्तुगमनस्यक्रान्त्यधीनत्वात्क्रान्त्यनुपातेनप्रागुक्तेनरविचेष्टाकेन्द्रसाधनंन्याय्यम् । तत्क्रान्तिभागगजभागलब्धभाद्येन संस्कृतगुणाद्इत्यनेनयद्भवेराशिप्र-

स्फुतिफलमागच्छति तदंवररविचेष्टाकेन्द्रंग्राह्यम् । स्थूलस्यास्य-
चेष्टाकेन्द्रस्यग्रहणेतुचेष्टागुणवैलक्षण्याद्व्यायुषिमासाद्यन्तराया
तत्स्थूलमिदं चेष्टाकेन्द्रमसदेवेतिसुन्दरोक्तः पन्थानितान्तरम-
णीयः स्वीकरणीयः ॥ चन्द्रउत्तरेणवक्तीस्यादेकोत्तररूपमित्या-
दावुत्तर शब्दस्याधिक्यार्थत्वादाधिक्येन चेष्टामूलक बलवान् ।
आधिक्यन्त्वार्थाद्रव्यपेक्षया । ततोरवेः षड्भाधिकेचन्द्रेपरमवि-
प्रकृष्टेपौर्णमास्यन्ते षड्भमितं चेष्टाकेन्द्रन्तथामान्ते सूर्यसमेच
न्द्रे आधिक्याभावाच्चेष्टाकेन्द्रं सून्यन्तच्चव्यर्केन्दुनैवभवतीति
तथोक्तम् । अतोनुपातेनावान्तरे साधितंबलंशुक्लपक्षबलतुल्य-
मेवायातीति पूर्वंपक्षबलंद्विघ्नमुक्तम् । एतेनद्विसङ्गुणे आयनपक्ष
वीर्येचेष्टाबलेतिग्मकराब्जयोः स्तः । इतीरितं श्रीपतिनानिता-
न्तं नतन्मतत्स्वाकविचारयुक्त्यं ति रत्नावली कारमतपास्तम् ।
अतोरवीन्द्वोश्चेष्टाबलेप्रागेवयोजितत्वान्नवीर्याय भवतइतिसर्व-
सुगमम् । वृहज्जातकेपि । उदगयने रविशीतमयूखौचेष्टितवी-
र्यंतौपरिकल्प्याविल्यत्र चन्द्रपक्षे उदक्पदपर्यायोत्तरपदवाच्यरव-
संबन्धेनाधिक्यार्थेलक्षणास्वीकर्तव्या । सर्वेगत्यर्थाः प्राप्त्यर्था-
स्तदयनेप्राप्तावितियावत् । तेनोदगयनइत्यस्याधिक्यप्राप्ताविल्य-
र्थेसर्वंमनवद्यम् । सवासयानासमकारिवृत्तिर्दिवाकरेणामलकेश
वोक्तेः पितृव्यसंप्राप्तधियाखगानांवीर्याधिकारःसमगात्समाप्तिम् ।
इतिश्रीमांवत्सरवरतरकेशवदैवज्ञकृत जात कर्म पद्धतिटीकायां-
सवासनायांदिवाकरविरचितायांप्रौढमनोरमाभिधायांबला- -
ध्यायस्तृतीयः । अथेष्टकष्टसाधनाध्यायोव्याक्रियते । तत्रप्रथमं-
रवीन्दुचेष्टाबलयोगोकष्टेष्टविधावुपयोगोस्तीत्युक्तांतत्केनाम्र--
श्मिः केचेष्टकष्टे इत्युपस्थितौतदानयनंवृत्तेनैकेनाह ॥

येचेष्टोच्चबलेरसैर्विनिहतेसैकेनिजा
श्मयश्चेष्टातुङ्गबलाहतेःपदमिहेष्ट
स्याद्बलोनैकयोः। घातान्मूलमिदंहि
कष्टमथतद्रूपंदशायाःफलंवीर्यंह्येकपृ
थगिष्टकष्टगुणितेह्येचेष्टकष्टाह्वये ॥१२॥

येचेष्टाबलोच्चबलेसूर्यादीनांप्रागानीतेतेरसैः षड्भिर्विनिहतेगुणितेततःसैकेऊर्ध्वस्थानेरूपसंयुतेसतिनिजाः स्वकीयारश्मयोमरीचयः स्युः। चेष्टाबलाच्चेष्टारश्मयउच्चबलादुच्चरश्मयः स्युरित्यर्थः। अत्रोपपत्तिः। स्वोच्चस्थेग्रहेसप्तमरीचयः परमनीचस्थेतुपरमाल्पारूपमितामरीचिरत्रागमएवप्रमाणम्। तत्रोच्चनीचयोरन्तरंपरमंषड्राशिमितंनीचेनीचग्रहान्तराभावः। अतोनीचग्रहान्तरतएवरश्मिसाधनंकर्तुंयुज्यते तत्रानुपातः यदिषड्राशितुल्येननीचग्रहान्तरेणषण्मरीचयस्तदेष्ट षडल्पनीचग्रहान्तरेण किमिति। अत्रनीचग्रहान्तरंषड्भिर्गुणनीयंषड्भिरेवभाज्यमितिजातं। तत्रलब्धंनीचग्रहान्तरमुच्चबलंप्राक्प्रतिपादितमेव। अथतदेवषड्भिर्गुणनीयंततोरूपयुतमुच्चरश्मयोभवन्तीतिनिष्पन्नम्। एवंशून्येचेष्टाकेन्द्रेपूर्ववदेकोरश्मिः। षड्भमितेसप्तरश्मयः। कल्पभावादिष्टकष्टार्थंचेष्टागुणार्थंचकल्पितानतुवास्तवाः। शेषंसुगमम्। यद्वा। चेष्टोच्चकेन्द्रराशयः सैकाद्विगुणांशादियुताश्चेष्टोच्चरश्मीभवतः। तथाचपराशरः नीचोनंतुग्रहंभाद्यधिकंचक्राद्विशोधयेत्। उच्चरश्मिर्भवेद्राशिः सैकोद्विघ्नांशसंयुतः। चेष्टाकेन्द्रंकुजादीनांपूर्वाध्यायेसमीरितम्। उच्चरश्मिवदानीयचेष्टारश्मिमितिपूर्वंप्रदर्शितेऽनुपातेषट्तुल्ययोर्गुणहरयोःसत्त्वात्सर्वमिद

मुत्पद्यते । चेष्टोच्चरश्म्योर्योगार्धं स्पष्टरश्मयो भवन्ति । तेषां यो-
गे यासंख्या भवति ततः पञ्चेन्दुतो विंशतिरेव यावद्भवस्तयस्ते मनु-
जं सुशीलमित्यादि जातकफलं निगाद्यम् । तदाह पराशरः । द्व-
योर्युतः । दलं तु शुभरश्मिः स्यादिति । अथेष्टकष्टसाधनमाह ।
चेष्टा तुङ्गबलाहतेरिति । अत्र पदार्थः सुगम एव । तात्पर्यार्थस्तू-
च्यते चेष्टाबलेनोच्चबलमुच्चबलेन चेष्टाबलं चोभावच जनप्रसिद्धया-
खण्डगुणनात्मिकया गोमूत्रिकागुणनरीत्या गुणनीयं तस्य मूलमि-
ष्टसंज्ञञ्चेष्टाबलोनरूपतुङ्गबलोनरूपयोर्घातस्य मूलं कष्टं स्यात् । अत्रे-
दं तत्त्वम् । बलघातस्य बलोनरूपघातस्य चायस्य मूलं ग्रहीतुमिष्टं-
सविकृष्टोऽपि षष्टिवर्गे ३६०० णगुणनीयः । ततोऽधः स्थिताङ्कात्ष-
ष्ठ्या भागे लब्धमुपर्युपरि संयोज्य यदूर्ध्वस्थाने निष्पद्यते तस्मात्त्यक्त्वा-
न्त्याद्विषमात्कृतिमित्यादिपाटीगणितोक्त्या मूलमानेयम् । पु-
नर्यच्छेषं ततो मूलावशेषकं सैकं षष्टिघ्नं विकलान्वितम् । द्विसंगुण-
द्वियुक्तेन मूलेनाप्तं स्फुटं भवेदित्याद्यपरिभाषया मूलग्रहोह्यम् ।
एवं लब्धं द्विष्ठं पदं षष्टिभक्तं सविष्टं मूलमतिस्फुटं स्यात् । तथा च-
करणकण्ठीरवे केशवार्कः । यत्षष्टिवर्गनिहतात्पदमभ्रषड्भिर्भक्तं
स्फुटं तदिह मूलममूलदस्येति अत्र बलघातो बलोनरूपघातश्च द्विवा-
रं षष्ट्या सवर्णनीयः षष्टिवर्गनिहतघातसमो भवतीति सुगमोपा-
यो वेद्यः । ऊर्ध्वाङ्कः षष्टिगुणोऽधःस्थाङ्केन युतः पुनरप्येवमेवका-
र्यम् । एतदेव सवर्णनं निष्ठाङ्कस्यैकस्थानस्थितत्वमिति यावत् ।
अत्रोपपत्तिः । उच्चस्थे ग्रहे शुभफलं संपूर्णरूपमितमशुभफलाभा-
वः । नीचे शुभफलाभावोऽशुभफलं संपूर्णरूपं मध्येऽनुपातेनोच्चब-
लतुल्यमेवोच्चशुभफलं जातमुच्चबलोनरूपसममेवोच्चाशुभ
फलं जातम् एवं षड्भमितचेष्टाकेन्द्रे संपूर्णरूपं शुभफलमशुभफला-

भात्र: । शून्ये चेष्टाकेन्द्रे शुभफलाभावोऽशुभफलं संपूर्णं रूपम् । अ-
न्तरालै राशिकेन चेष्टाबलतुल्यमेव चेष्टाख्याशुभफलं चेष्टाबलोन-
रूपतुल्यमेव चेष्टाख्याशुभफलं जातम् । चेष्टोच्चफलयोरनयो:
समुच्चयेन फलनिर्णये प्राप्ते संपूर्णतायारूपमितायाएवन्याय्यत्वे
चोपपत्तिरनुपातद्वितयात्मकपञ्चाराशिकेन । यदि रूपमिते संपू-
र्णोच्चफले संपूर्णे चेष्टाफले संपूर्णं रूपं फलं तदस्मिन्नुच्चफलेऽस्मिंश्चेष्टा
फले किमित्यत्र पञ्चसप्तनवराशिकादिकेऽन्योन्यपक्षनयनं फलच्छि-
दाम् । संविधाय बहुराशिजे वधे स्वल्पराशिवधभाजिते फलमिति
लीलावतीसूत्रेणाचेष्टोच्चफलयो: शुभयोर्घातस्तुष्टमशुभयोर्घात:
कष्टं जातम् । अत्रोदाहरणं यत्रोच्चफलं रूपस्य पञ्चमांशश्चेष्टाफ-
लं षष्ठांशस्तत्र पञ्चराशिकेन्यास: । १ । १ । फलच्छिदामन्योन्य
पक्षनयनं विधाय न्यास: । १ । १ ॥ ५ । १ । अत्र फलपक्षो बहुरा
शिस्तत्र त्यबहुराशिजे । १ । ५ ॥ १ । १ । घातेऽस्मिन् १ अ-
पक्षीयस्वल्पराशिवधे । १ । १ ॥ ६ । १ । नानेन ३० भक्ते
जातं फलम् १ फल । १ । ६ ॥ १ । ० । योर्घातोऽप्ययमेवा
तश्चेष्टोच्च ३० बल । १ । १ ॥ तुल्यचेष्टोच्चशुभफलयो
र्घातस्तुष्टं चेष्टोच्चयोगेनरू । ० । पतुल्यचेष्टोच्चाशुभफल
योर्घात: कष्टमितिसिद्धम् । अत्र घातरूपे तुष्टे चेदाधिक्यं तदा तन्मू
लेऽप्याधिक्यं कष्टे चेदाधिक्यं तदा तन्मूलेऽप्याधिक्यमिति चत्यभावा-
त्प्राचामाचार्याणां संमतत्वाद्ग्रन्थमपि मूलं गृहीतमाचार्येणेति-
ध्येयम् । मूले मूलाभावादेवाग्रेवर्गस्य शुभाशुभफलस्य वर्गे शुभा
शुभफलस्य च घातरूपमेवेष्टमुक्तं न तु तन्मूलरूपम् । अन्यथा यु-
क्तिसाम्यात्तदपि मूलमेवोक्तं स्यादिति श्रीपतिपद्धतिटीकायां सुन्दर
मिश्रा अप्याहु: । यद्वा फलद्वयोगेन रूपद्वयमिते न यदि रूपं संरूपूर्ण-
फलं तदेष्टचेष्टोच्चफलद्वययोगेन किमित्यनुपातेन चेष्टोच्चशुभफल

योगार्द्धमिष्टस्यात्तद्रूपाच्छोधितंकष्टंस्यात् । अयंप्रकारोभगवत्प-
राशरस्याप्यभिप्रेतः तथाचपराशरः । उच्चचेष्टाकरौव्यैकीद्वि-
भिर्हृत्वातुयोजयेत् । दलयेदिष्टमन्यन्त्यत्षष्टिभ्योवर्जितंफलम् ।
१ । अत्रोच्चचेष्टारश्मीरूपोनीयावद्दशगुणौक्रियेतेतावत्षष्टयंशादौ
तुङ्गचेष्टाबलेएवभवतः । अतस्तद्योगार्द्धमिष्टंतदूनषष्टिमितंक-
ष्टमिति । अत्रोपपत्तिः । षड्राश्यल्पनीचग्रहान्तरमुच्चकेन्द्रंभ-
वति । चेष्टाकेन्द्रंतुमध्यस्पष्टयोगार्द्धचलोच्चयोः षडल्पान्तर-
तुल्यंप्रसिद्धमेव । तदुच्चकेन्द्रंचेष्टाकेन्द्रंचराशिस्थानेसैकंद्विघ्नां-
शादियुतंसदुच्चचेष्टारश्मीभवतइतितेनैवोक्तम् । अस्योपपत्तिः
प्रागुक्तैव । अथरश्मितोवैपरीत्येनकेन्द्रंसाध्यते । रश्मीरूपोनाव-
शेषदलीकृतौकेन्द्रेस्यातांसैमावयवेदशगुणेअधोद्विगुणेचषष्टयंशा-
द्येतुङ्गचेष्टाबलेभवतइत्यु
पपन्नम् । शेषोपपत्तिःप्रागुपपादितैव । तस्माच्चेष्टोबलयोर्घात-
स्तुष्टंबलोनरूपयोर्घातःकष्टम् । अथवाबलयोगार्द्धमिष्टन्तदूनरू-
पंकष्टमितिनिष्पन्नम् । मूलरूपेष्टकष्टंतुपराशरादिमुनिमतविरुद्ध-
त्वादयुक्तत्वाच्चायुक्तमेवेति बोध्यन्तस्यदूषणान्तरमप्यग्रेवक्ष्य-
ते । साधितयोरिष्टकष्टयोः प्रयोजनमाह । अथतद्रूपंदशायाः
फलमिति । अथशब्दआनन्तर्ये । दशायाः फलंशुभमशुभंचतद्रू-
पंस्यात्तद्रूपंतत्स्वरूपमिष्टकष्टतुल्यमितियावत् । एतदुक्तंभव-
ति । गणितागतमिष्टंसंपूर्णमर्द्धंपादोवायावद्भवतितत्तुल्यंशुभ-
फलंकष्टेनतुल्यमशुभंफलम् । इष्टकष्टयोः साम्येशुभमशुभंचप्रा-
प्तंफलंसमंस्यान्मिश्रंफलमित्यर्थः । एतद्व्याख्यानंमूलरूपेष्टकष्ट
पक्षेतावदयुक्तम् । मूलेमानाभावात् किंच । मिश्रफलस्यानेकधा
पिसंपूर्णशुभफलस्यसंपूर्णाशुभफलस्यचावश्यकत्वेमूलरूपेतुमिप्र
श्रफलस्यलेऽर्द्धाधिकमिष्टंकष्टंचकदापिनस्यादितिदूषणान्तरम् ।

घातयोगार्द्धरूपयोर्प्येतद्द्वयं अपि च तथात्वे विसदृशाभ्यां घात योगार्द्धरूपसाधितेष्टकष्टाभ्यां शुभाशुभफलनिर्णयकथनस्यैकवाक्यतानस्यादिति यद्वा इष्टेऽधिकेऽस्मान्यतःशुभफलमधिकं कष्टाधिक्यत्वशुभफलमधिकं तत्साम्ये मिश्रफलमिति । इदमप्ययुक्तम् । स्वल्पाधिक्यबह्वाधिक्यस्थले सर्वत्राधिक्यस्य सामान्यरूपेण कथनस्यानौचित्यात् । अतोऽन्यथा व्याक्रियते । दशायाः शुभमशुभं च फलमिष्टकष्टस्वरूपं स्यात् । अयमभिसंधिः । इष्टेऽधिके कष्टाद्यावदधिकमिष्टं शुभफलमशुभफलात्तावदधिकं स्यादशुभं फलं शुभफलात्तावदूनं स्यात् कष्टेऽधिके इष्टात्कष्टं यावदधिकं तावदशुभं फलं शुभफलादधिकं स्यात् । इष्टकष्टयोः साम्ये शुभमशुभं च फलं समं स्यादिति सुन्दरमिश्रसंमतमेतद्युक्तियुक्तं च । सुन्दरमिश्रवाक्यम् । कष्टेष्टयोर्विवरतुल्यमसत्सतोः स्यात्तदान्तरं हि फलयोः समतासमत्वे इति । नन्विष्टकष्टान्तरतुल्यशुभाशुभफलान्तरमित्युक्तं तन्न मृष्यामः । घातरूपयोर्योगार्द्धरूपयोरिष्टकष्टयोर्विरोधादुभयोरपि प्रमाणसिद्धत्वे न विनिगमकाभावादन्यतरपक्षाश्रयणस्य कर्तुमशक्यत्वादिति चेत् सत्यं घातरूपयोर्योगार्द्धरूपयोरिष्टकष्टयोर्यद्यप्युक्तो विरोधोऽस्ति तथाप्यन्तरे तयोरविरोधत्वाच्च । अनन्तरोदीरितव्याख्यानेऽन्तरस्यैवोपयुक्तत्वात् । मन्दप्रतीत्यर्थमत्रोदाहरणम् । पूर्वमुदाहृते उच्चचेष्टाशुभफले । १ । १ । एतदूनं रूपं क्रमादशुभं फलं । ४ । ५ । शुभफलघा । ५ । ६ । तदिष्टम् १ । अशुभफलघा । ५ । ६ । तःकष्टम् । २० । अनयोरन्तर ३० म् १९ । एवं शुभफलयोगार्द्धमिष्टम् ११ । ३० । अशुभफलयोगा । ३० । र्द्धं कष्टम् । ४९ । अनयो । ६० । रन्तरमिदम् । ३८ । द्वाभ्यामपवर्त्य । ६० । तज्जातम् । १९ । समसे । ६० । वसितःसर्वमवदातम् । भावस्थानानो । ३० । कयोगाद्भवं यत्तत्सर्वं तस्य-

योज्य ऽदशायामित्यभिहितत्वात्सर्वेषामपिग्रहफलैनऽदशायामेव भवितव्यमितिदशायाः फलमितियुक्तमुक्तम्। वक्ष्यमाणेनेष्टकष्टेन केवलं सप्तवर्गफलमेव चिन्तनीयन्तदतिरिक्तं सर्वं फलमनेनैवेष्टकष्टेन विचारणीयम्। तथा चाहुः। सप्तवर्गफलादन्यत्सर्वं मतेन चिन्तयेत्॥ सप्तवर्गफलं वाच्यं वक्ष्यमाणेन केवलमिति। अतोदशायाः फलमित्यत्र सामान्यशब्दस्य विशेषपरत्वाद्दशायाः फलं सप्तवर्गफलातिरिक्तमितिव्याख्येयम्।

ननु सर्वफलं दशायां योज्यमित्युक्तेर्दशायाः फलं तद्रूपमित्यनेनैव सप्तवर्गजफलनिर्णये प्राप्ते किमर्थं गुरुतरमाचार्येण पुनरिष्टकष्टानयनं कृतमिति। शृणु तर्हि। यदिदमुक्तमिष्टकष्टसाधनं तत्पराशरादिसंमतम्। वक्ष्यमाणं तु यवनसंमतमिति। प्रकारद्वयंस्वस्वमते भिन्नमेवास्ति। तथा सत्यंशायुर्दायादीनां चतुर्णां स्वस्वमतभिन्नत्वेपि यथापूर्वैरंशोक्तं लग्नबलात्प्रसाध्यमित्यादिव्यवस्था कृता तथैतानीतनैः सप्तवर्गोत्पन्नत्वाद्वक्ष्यमाणेष्टकष्टस्यातस्तेन सप्तवर्गफलनिर्णयस्तदितरफलनिर्णयश्चैष्टोच्चबलोत्पन्नेनेष्टकष्टेनेति व्यवस्था कृतेति न कश्चिद्दोषः न च सप्तवर्गजेष्टकष्टं यवनोक्तत्वादप्रमाणमिति वाच्यम्। ब्रह्मविष्णुरुद्रमुखनिर्गतशापेन यवनतामधिगतेन भगवत्सूर्येणैव यवनशास्त्रप्रणयनात्। तथा चोक्तमपावनं यानवशास्त्रं कथं विप्रैः पठितव्यमित्याशङ्कायां पूर्वैः। केशविष्णुमुखनिर्गतशापाम्लेच्छताभिगततिग्ममरीचिः रोमकेन पुरिखिलमशेषं तद्द्विजादिभिरतोध्ययनीयम्। १। म्लेच्छताधिगततिग्ममरीचेरितिपञ्चम्येकवचनम्। पुरि रोमकाख्ये। अशेषं समग्रलब्धं शास्त्रमिति शेष। अन्यत्स्पष्टम्। अतायं विशेषः। ग्रहस्ययन्नवांशसंबन्धिष्टेष्टफलं तद्वर्गोत्तमस्वपरगेशुभं यदुक्तमित्यादिवक्ष्यमाणविशेषवाक्यैर्विचिन्त्यम्। लग्नस्य सप्तवर्गजं शुभाशुभ-

फलंनुलग्नहोरादिस्वामिनश्चेष्टोच्चफलोत्पन्नेष्टकष्टेन चिन्त्यमिति । अथेष्टकष्टबलदृशोरानयनमाह । वीर्यंदृक्पृथगिष्टकष्टगुणितेद्वेचेष्टकष्टाह्वयेइतिग्रहस्यवीर्यंषड्बलैक्यंपृथक्स्थानद्वयेस्थाप्यम् एकत्रेष्टगुणमिष्टबलपरत्रकष्टगुणंकष्टबलंस्यात् । दृगित्यत्रजात्येकवचनम् । तथाचग्रहंप्रतिदृशोया: पूर्वमानीतास्ताग्रहेनकष्टकष्टेनचगुण्या: क्रमेणेष्टदृष्टय: कष्टदृष्टयश्चभवेयु: । केचित्तु । ग्रहप्रतियादृष्टयोयेषांग्रहाणामानीतास्तास्तत्तद्ग्रहेष्टकष्टाभ्यांगुणनीयाइत्याहु: । अस्यप्रयोजनंग्रहस्यशुभफलंशुभबलवशाद्योज्यमशुभबलवशादशुभफलंयोज्यम् । एवंदृष्टिशुभ:शुभलमिष्टदृष्टिकष्टदृष्टिवशाद्योज्यमितिप्राञ्च: मिश्रास्तु । बलदृग्गुणनमिष्टकष्टेनव्यर्थमेवेत्यूचुस्तदेवयुक्तमुत्पश्याम: तथाहि । इष्टं चेदाधिक्यं तदातद्गुणबलदृष्ट्योरप्याधिक्यं कष्टेचेदाधिक्यंतदातद्गुणितबलदृष्ट्योरप्याधिक्यम् । यावदाधिक्यपक्षेपि इष्टकष्टयो: संपूर्णरूपान्तरस्थालेग्रहस्ययावद्बलमस्तितावदेवान्तरमिष्टबलयोरेवंयावतीदृगस्तितावदेवान्तरमिष्टदृष्टिकष्टदृष्ट्योश्चभवतिप स्यात्तद्बलेनतयादृशाचसंपूर्णपादषष्ठाशकल्पनाया मिष्टकष्टयोर्यावदन्तरतावदेवेष्टकष्टबलयोरिष्टकष्टदृशोश्चान्तरमतोबलदृशोरिष्टकष्टगुणनंव्यर्थमेव । जातकीयवोक्तमस्मिन्ग्रहेवलवतीदंफलंस्यात्तत्संपूर्णबलेषड्रूपाधिकेसंपूर्ण फलंमध्यबलेषड्रूपाल्पेमध्यंहीनबलेविरूपाल्पेहीनंफलंयुद्धवशात्शुन्यबलेर्थातफलाभावइतिसंपूर्णबलमध्याद्यन्यतमेनशुभाशुभफलंसमंनिर्णीयपश्चादिष्टयावदाधिक्येशुभंफलं तावदधिकंकष्टे यावदधिक्यं तावदशुभफलमधिकंमास्यसमंएवं गणितागतदृष्टा संपूर्णपादषष्ठांशादिनाशुभाशुभंसमंनिर्णीयपश्चादमुकग्रहदृष्टोयंग्रहएतत्फलदइतिदृष्ट्यस्यैवफलदात्त्वाद्दृष्ट्यस्ये इष्टे यावदाधिक्यं तावच्छुभफलमधिकमित्यादीष्टकष्टा

न्तरतुल्यं तारतम्यमिति वलेनद्दा । पीष्टकष्टयसमुच्चयो न तु बाध्यबाधकभाववृत्त्यप्याहुः ॥

खोच्चे रूपं चिकोणे स्वरसबिरहितं स्वर्क्षगेहे चयोष्टांशाः स्वाधीष्टर्क्षद्दष्टचंयुजि चरसाः स्यात् समर्क्षेष्टमांशः ॥ भूपांशो वैरिगेहेष्यरिभयुजि रदांशश्च नीचे खमीशादिष्टं गेहेत दूनैकमसदघचदलं षट्सुकार्यैतदैक्ये ॥१४॥ पङ्क्तयाः सप्तसुकोष्ठयोः प्रथमयोरिष्टासदैक्येऽन्तराप्तेस्याप्येभदलादिषट्सुचतदर्धैं वर्गपानां पृथक् ॥ क्लीवोनाः सदसद्युतो निजनिजेतन्निघ्नद्दष्टाशुभे वर्गैः तत्स्थखगौजसोः सदसतोर्घातात्पदघ्ने स्फुटे ॥ १५ ॥

प्रथमपद्यं व्याख्यातचरमेव तथापि किंचिद्व्याख्यायते । खोच्चमूलत्रिकोणादिवर्तिनि ग्रहे रूपचरणोनरूपप्रभृति गेहेऽग्रहस्यानेहेशाद्ग्रहाधीशवशादिष्टं स्यात् । अयमभिसंधिः । ग्रहोय-

स्मिन्ग्रहेस्थितद्ग्रहस्याभीयदिस्वयमेवतद्रूपार्द्धंबलंयदधिमि-
त्रंतदावयोष्टांशाइति ।

अत्रेशपदस्याधिमित्रादावन्वयोनतुस्वोच्चत्रिकोणानी-
चराशिषु । अतग्रहेशस्वोच्चारिगामित्रिरूपप्रभृतिकं शुभं फल
मितिकेषांचिद्व्याख्यानं प्राग्वत्प्रत्याख्येयम् । तस्यायुक्तत्वं दर्शि
तं दर्शयिष्येच । तेनेष्ठेनउंनमेकाप्रसत्कष्टङ्केहेस्यात् । अथानं
तरंषट्सुहोरादिवर्गेषुदलं स्थाप्यन्तत्रग्रहवदागतशुभाशुभयो-
र्दलमिति केशवसांवत्सराणांव्याख्यानम् । अत्रोदाहरणम् ।
कस्यचनग्रहोमित्रहोरायामास्तेतेनग्रहवत्प्राप्तंशुभंचरणप्रमितम् ।
१५ एतदूनंरूपंजातंग्रहवदशुभंच ४५ अनयोरर्द्धंजातेहोरास्था-
नस्थक्रमेणशुभाशुभे । ७ । ३० । २२ । ३० मित्रास्तुयथाभद्र-
लादिकेषुवर्गेषुतस्यार्द्धमतोनिधेयमित्यत्राश्रयगुणकरिष्टभङ्गदशा
बलविषयेचग्रहस्यस्यैवार्द्धंहोरादौसमंस्थाप्यततद्वचापिग्रहएव-
स्थापितस्यशुभस्याशुभस्यचार्द्धंहोरादौ समभेवस्थाप्यमित्यूचिरे ।
तत्रकेशवदैवज्ञानामयमाशयःअस्मिन्स्थलेसर्वैरपिशुभपापफला-
र्द्धमितिसामान्येनोक्तत्वाद्ग्रहवदागतशुभाशुभयोरेवदलंस्थाप्यम् ।
भद्रलादिकेषुवर्गेष्वित्यादौरिष्टभङ्गबलादौचतच्छब्दस्यपठितत्वा
न्तेनचपूर्वपरामर्षाद्ग्रहेस्थापितस्यैवार्द्धंस्थाप्यम् । तथाचरिष्टभगे
श्रीपतिपद्धतौ । तद्दलंभवतिशेषवर्गजमिति । आश्रयगुणकेचहो-
रादिवर्गंगुणकस्तुभवेत्तदर्द्धमितिदशाशुभाशुभयोरेवहोरादौदल-
मिति । अहंतुब्रवीमि । स्वोच्चे मूलत्रिकोणे चस्वर्क्षेधिसुहृदिक्र-
मात् । मित्रर्क्षे चशुभेवाधिशुभे: । १ । नीचेष्वषष्टिरिष्टश्चि-
त्रवाग्निः कारकारास्तिथिः । नागोवेदाः करौशून्यंशुभमेतत्फलं-
विदुः । २ । षष्टिभ्योवर्जितान्येतेष्विष्टंस्यादशुभफलम् । तदर्द्धं-
तुफलंप्रोक्तमन्यवर्गेशुभाशुभम् । ३ । इतिपराशरेणतच्छब्दस्य-

प्रयोगाद्युक्तियुक्तत्वाद्गृहफलस्यैवार्द्धं समं स्थाप्यम् । कार्येतदै-
क्यइति । सप्तस्थानस्यफलानांशुभानामैक्यमशुभानांचैक्यंका-
र्यमित्यर्थः । पङ्क्त्योरिति । सप्तसुकोष्ठसुपङ्क्त्योः कृतामिदृष्टा
सदैक्यंस्थाप्यमितियोजना । सप्तशोभनाः कोष्ठाययोस्तेतथापङ्-
क्त्योः । सप्तमीद्विवचनमेतत् । दृष्टंचअसचदृष्टासतीतयोरै-
क्यंयोगौ । इष्टैक्यंप्रागानीतंचतुर्भक्तंशुभपङ्क्तौस्थाप्यंकष्टै-
क्यमशुभपङ्क्तौचतुर्भक्तंस्थाप्यमित्यर्थः । ननुसप्तकोष्ठानांसत्वा-
द्विनिगमकाभावेनकस्मिन्स्थाप्यमित्याशङ्कायामाह । प्रथमयोरिति
प्रथमयोरर्थात्कोष्ठयोः । गृहकोष्ठकयोरितियावत् । इदमपिस-
प्तमीद्विवचनम् । होरादिवर्गेषुतुगृहेस्थापितफलस्यैवार्द्धंसमंस्था
प्यम् । वर्गपानामिति । गृहादिसप्तवर्गस्वामिनांपृथक्प्रत्येकंनि
जनिजेस्वीयेस्वीसदसद्युतीशुभैक्याशुभैक्येउक्त्यापूर्वोक्तप्रकारेण-
कृत्वानन्तरंताभ्यानिघ्नेदृष्टाशुभेयेपङ्क्त्योः सप्तसुकोष्ठयोरित्या
दिनास्थापितेतेकार्ये । उक्त्येत्यनेनस्वोच्चेरूपमित्यादिनास्थापि-
तयोरेवशुभाशुभयोरैक्येकार्येनत्वनन्तरंस्थापितयोरितिध्वनित-
म् । अत्रेदूदेद्विवचनं प्रगृह्यमिति प्रगृह्यत्वात्पन्तु तप्रगृह्याअचिनि
त्यनेनप्रकृतिभावस्तस्मात्तन्निघ्ने दृष्टाशुभेइतिपाठेनभाव्यम् । ए
वंचछन्दोभङ्गोदुर्वारः । अतस्तत्सङ्गुणेष्टाशुभेइतिकृतसमासः पा
ठोरमणीयः ॥ ननुकार्येतदैक्येइत्यनेनप्राग्योगमभिधायपुनर्य-
दाचार्येणयोगः कार्यइत्युक्तं तदयुक्तमिवप्रतिभातिपुनरुक्तिदो-
षादितिचेत् । सत्यम् । यदिप्राक्साधितएवयोगोऽनष्टः स्थाप्यते
तदापुनर्योगसाधनं व्यर्थमेव । तथापियदिप्राक्साधितयोगस्य-
स्यचतुर्भागंगृहीत्वानाशः क्रियतेतदापुनर्योगकरणंसार्थकमेवेत्य
नुशयेनाचार्येरुक्तमितिमकोपिदोषः । यद्वा । अन्येइतिकर्तव्या-
तायांचलाघवं प्रतिपादयताचार्येणयत्पुनर्योगसाधनमभिहितं

तत्रेदमाकूतम्। प्राग्योगसाधनं व्यर्थमेव। किंतुस्वोच्चेरूपमि त्यादिनागृहस्थापितस्यैवशुभाशुभस्यचतुर्थांशः स्थाप्यइति। य-द्येवमभिमतंतर्हियोगचतुर्भागः स्थाप्यइतिकिमर्थमुक्तमितिना-शङ्कनीयम्। दामोदरादिग्रन्थाभ्यासवशादुक्तमितिवक्तुंशक्यत्वा त्। अतश्श्रीपतिभिरपि। येखेटभोच्चादिफलेशुभाशुभेसरूपवर्गा द्वंविभानितेइतिगृहशुभाशुभस्यैवचतुर्थ्यांशः स्थापितोनतुयोग-स्य। यद्यन्नयोगोभिमतः स्यात्तदातदीययुक्त्येत्यपिसग्रन्थवदुक्तः स्यात्। अतः पङ्क्त्योः सप्तसुकोष्ठयोः प्रथमयोरिष्टासतीतिक्लृप्ता सं स्थाप्येइतिपाठः पाठ्यः। यद्वा। शब्दक्रमादर्थक्रमोबलीया नितिन्यायात् वर्गपानांपृथग्युक्त्यापूर्वप्रकारेणयेनिजनिजेसदस त्युतीतत्रिघ्ने इष्टाशुभेकृत्वानन्तरंवक्ष्यमाणं कर्मकार्यमितिव्या-ख्येयम्। कलितकेशवसतैरेतदेवाभ्युपेयम्। अमुनाप्रकारेणसा धितेयेइष्टाशुभेतेवर्गेट्तत्स्थरवगौजसोः सदसतोर्घातात्पदघ्ने स-तीस्फुटेभवतः। वर्गेट्वर्गस्वामी। तत्स्थः खगोवर्गस्थग्रहः ओ-जसोः बलयोः सदसतोरिष्टगुणितयोः। शेषंस्पष्टम्। अत्रे-ष्टकष्टबलयोर्घातः श्रीपतिसुन्दरादिविरुद्धः किंतुकेवलयोरे-ववलयोर्घातःकार्यः अतोव्वैवंपठितव्यम्। वर्गेट्तत्स्थखगौज-सोः सदसतोर्घातात्पदघ्नेस्फुटेइति। अथोपपत्तिः सारावल्या-म्। राशिपतौबलयुक्तेराशौचबलान्वितेतथाचन्द्रे। राशिफलं-तत्सकलंनीचोच्चादिविधिनाचसंचिन्त्यम्। अत्रराशिवलस्वा-मिबलयोगेनराशौबलवतीदंव्यर्थमितिप्रागुक्त्याराशिपतौबलयु-क्तेतद्राशिफलंसकलंसंपूर्णंसंचिन्त्यनीचोच्चादिविधिनाचसंचि-न्त्य। नीचोच्चादिविधौचकारेणराशिपतिचन्द्रयोः समुच्चयः तथासतिचन्द्रस्यनीचोच्चत्रिकोणस्वगृहादिस्थानवशेनचन्द्राधि ष्ठितराशेः स्वामिनश्चनीचोच्चत्रिकोण स्वगृहादिस्थानवशेनच-

न्द्रस्यराशिफलं चिन्त्यम् । अर्थादेवं होरादिफलेपि । होरादिप-तौ बलयुक्ते तथा चन्द्रे बलयुक्ते चन्द्रतदधिष्ठितहोरादिपतेश्च नीचो-च्चत्रिकोणस्वगृहादिस्थानवशेन चन्द्रस्य होरादिफलं चिन्त्यम् । पश्चादस्य वाक्यस्य स्वोच्चेस्थितः शुभफलमित्यादिवाक्यद्वयेन स-हैकवाक्यतया स्वोच्चत्रिकोणस्वगृहादिस्थानजशुभाशुभ फलस्य संकोचेन सप्तवर्गफलेविषयेसिद्धे चन्द्रः स्वोच्चस्थः स्वसप्तवर्गफलं-शुभं संपूर्णमशुभं शून्यं करोति मूलत्रिकोणस्थः शुभं पादत्रयमशु-भं पादं करोतीत्यादिना चन्द्रस्य स्वोच्चत्रिकोणगेहादिस्थानजशुभा-शुभ फलं सप्तवर्गेपि समानं सिद्धम् । गृहहोरादितेश्च नीचोच्चादि विधौ तारतम्येन शुभाशुभ फलस्याकाङ्क्षायाम विशेषात् स्वोच्चेस्थि तः शुभ फलमित्यादिसिद्धतारतम्यमेव लब्धम् । एवं सति चन्द्राधि-ष्ठितराशिहोरादिस्वामी स्वोच्चस्थश्चन्द्रस्य राशिहोरादि फलं शुभं-शून्यं करोतीत्यादिना तत्तद्वर्गेशस्य स्वोच्चादिस्थानजशुभाशुभफ-लमन्यदपि सिद्धम् । तथा चायं निष्कृष्टोर्थः । चन्द्रस्य स्वोच्च-त्रिकोणादिस्थानजशुभाशुभफलेन चन्द्राधि ष्ठितराशिहोरादिप-तेश्च स्वोच्चत्रिकोणादिस्थानजशुभाशुभफले न समुच्चयेन चन्द्र-स्य राशिहोराद्रेष्काणादिफलनिर्णयः । एवं चन्द्रपदस्थाने भौमादि-पदोल्लेखं कृत्वा भौमादिसप्तवर्गेप्यर्थसिद्धिः कार्या शशिवदतोन्येप्य नुपरिचिन्त्या इति वराहोक्तेः । प्रथवर्गस्थ वर्गेशयोः स्वोच्चादि-स्थानजशुभ फलं तद्द्विगुणं रूपमशुभं फल मितिसिद्धे वर्गस्थस्य स्वोच्चा द्यन्यतमस्थानजशुभाशुभफलयोः सप्तवर्गेपि समयोस्थ तद्वर्गेशस्य स्वोच्चाद्यन्यतमस्थानजशुभाशुभफयो स्यत्तद्वर्गेविलक्षणयोस्स-मुच्चयेन वर्गस्थस्य राशिहोरादिसप्तवर्गफलस्य निर्णये प्राप्ते संपूर्णता यारूपमिता या न्याय्यत्वे प्राग्वदुपपत्तिरनुपातद्वयात्मक पञ्चराशि-केन । यदि रूपोन्मिते संपूर्णे वर्गस्थले संपूर्णे वर्गेशफले संपूर्णं रूपं फ-

लंतदास्मिन्वर्गंस्थफलेकिमितिपूर्ववद्वर्गस्थवर्गेशयोः शुभफलघा-
तद्दृष्टमशुभफलधातः कष्टंजातम् । किंच । वर्गस्थवर्गेशयो-
रुपद्वयमितेनपरमफलयोगेनसंपूर्णं रूपं यदिफलंतदानेनवर्गस्थव-
र्गेशफलयोगेनकिमितित्रैराशिकेनवर्गस्थवर्गेशयोः शुभफलयो-
गाद्दृष्टमिष्टमशुभफलयोगाद्धकष्टंसिद्धम् । प्रमाणसिद्धयोरनयो
रनयोरैक्यंपुराप्रदर्शितमेव । अतः सम्यगुक्तंसकलजातकशास्त्र
तत्त्ववेदिभिः श्रीमत्सुन्दरमिश्रैः वर्गस्थभप्राप्तशुभाशुभेयेवर्गेशगे
होक्तशुभाशुभाभ्याम् । युतेद्विते संगुणितेथवातेराश्यादिवर्गेस्थ-
शुभाशुभानीति । अथप्रकृतेस्वोच्चेरूपमित्यादितदूनेकमसदि-
त्यन्तंसर्वंप्रतिपादितवासनमेव। प्रधानताराशिफलस्यनूनंहोरा-
दिवर्गाद्द्विगुणंगृहंयदितियवनवाक्येनहोराद्यपेचयाराशेर्द्वैगुरा-
यलाभेनराशौयत्स्थापितस्यार्द्धंहोरादिषुसमंस्थाप्यमतउपपन्नं-
दलंषट्स्विति । अग्रेवर्गेशस्यशुभयोगेनाशुभयोगेनचगुणनीयम-
स्यतः कार्यैतदैक्येद्वृतिसर्वंसाधु । अथवर्गस्थस्यशुभाशुभफलेन-
गुणनीयंतत्रकेवलयोर्गुणयगुणकयोर्घातेयावत्फलेतावदेवगुणयगु
णकयोरेकस्मिन्समेनकेनचिद्धक्तेनगुणितेपरस्मिन्भक्ते पश्चात्तयो--
र्घातेकृतेसतिस्यादितिप्रसिद्धम्। यथागुण्यः ४ गुणकः १० अन-
योर्घातेजातंगुणनफलम् ४० अथवागुण्योद्विभक्तः २ गुणको-
द्विगुणितः २ अनयोरपि ।

घातेजातन्तदेव ४० । द्विभक्तगुणकेन ५ द्विगुणितगुण्ये
८ हतेवातदेवजातम् । ४० एवमत्राचार्येणवर्गस्थशुभाशुभफ-
लं गुण्यं चतुर्भिर्भक्तं कृतमतः पङ्क्त्योः सप्तकोष्ठयोः प्रथमयो-
रिष्टासतोतेकृताप्ते स्थाप्येद्वृतिसुष्ठूक्तम् । ऐक्येद्वृतिसम्पाताया
तम्। अत्रापिहोरादयोपेचयाराशेर्द्वैगुण्ये नराशिफलस्यैवार्द्धंहोरा
दौसमंस्थाप्यमतोभदलादिषट्सुचतर्द्धेद्वृतिशोभनमभिहितम्।

एवं वर्गेशस्यागेहोक्तशुभाशुभफलरूपोगुणकश्चतुर्गुणितोजातस्वर्गेशस्यसप्तवर्गजशुभैक्यशुभैक्यतुल्यंयतोग्रहफलस्याद्र्धंहोरादौस्थापितमस्तितद्योगेग्रहफलं द्विगुणं भवतितत्रग्रहफलेयोजितेचतुर्गुणं ग्रहफलमेवभवतीतिग्रहफलेचतुर्गुणेसतिशुभवर्गजफलयोगएवभवतीतिपर्यवसितम्। असावेवगुणकः। अनेनगुणकेनचतुर्भक्तावर्गस्यग्रहफलरूपोगुणयोगुणयोतोवर्गमानांपृथक्त्वोक्त्यासदसद्युतोनिजनिजेतत्सगुणेष्टाशुभेइतिसर्वंमवदातम्। अन्येतुग्रहस्वामिनिस्वोच्चमूलत्रिकोणादिस्थेरूपपादोनरूपप्रभृतिकंशुभंफलंतदूनरूपतुल्यमशुभंचफलंस्थाप्यंहोरादौतुगृहवदागतशुभयोर्दलंगृहस्थाप्यंनगृहस्थितफलस्यतथा सप्तवर्गजशुभयोगाशुभयोशुभयोगयोः चतुर्थांशः पञ्चयोः स्थाप्योनकेवलंग्रहस्यशुभाशुभफलयोरित्याहुः। तत्रग्रहस्वामिनिस्वोच्चत्रिकोणादिस्थेरूपचरणोनरूपादिशुभंतदूनैकमशुभंफलमितितावदयुक्तम्। यतस्तथासतिवर्गस्यस्वर्गेशस्यस्वस्वाच्चाद्यन्यतरस्थानजशुभाशुभफलाभ्यासमुच्चयेनवर्गस्यशुभाशुभफलनिश्चयदृष्टोऽर्थः पर्यवस्यति। वराहकल्याणवर्मादिग्रन्थावलोकनेनतुवर्गस्यवर्गेश्वरयोः स्वोच्चादिस्थानवशेनवर्गस्यशुभाशुभनिर्णयोयमर्थः प्रतीयते। अतस्तदसदित्यवधेयम्। होरादौग्रहवदागतयोः शुभाशुभयोर्दलंस्थाप्यतथासप्तवर्गजशुभाशुभैक्येचतुर्भक्ते पञ्चयोः स्थाप्येइत्यपिवासनाशून्यतयानितरामयुक्तमितिबोद्धव्यम्। अन्यथात्ररूपाधिकस्यापीष्टकष्टस्यसंभवात्सर्वत्रसंपूर्णतारूपात्मिकेतिपद्धतिकृतागर्गपराशरादीनांसिद्धान्तोव्याकुप्येत। भावद्वलादौसर्वत्रपरमतायारूपमितायाः कल्पितत्वादनैकस्मिन्नेवरूपाधिकपरमतास्वीकारेऽननुगमोवितद्दूषणम्। एतदननुगममभियैवप्रागिष्टकष्टेवैराशिकद्वयात्मकपञ्चराशिकेनोपपत्तिमुपकल्प्य

चेष्टोच्चशुभफलघात:कष्टमित्युक्तंसर्वाचार्यैः । तस्मादिष्ट कष्टविषयेसुन्दरोक्तिरेवसुन्दरेतिदिक् । अथवर्गोत्तरस्थस्यवर्गोत्तमसोरित्यत्रयुक्तिः । राशिपतौबलयुक्तेइतिपूर्वंप्रदर्शितेसारावलीवाक्येवर्गेशेबलयुक्तेवर्गस्थेचबलोपेतेतत्फलं सकलमित्युक्तम् । तथावर्गेशयोः स्वोच्चादिस्थानवशेनफलनिर्णयइतिचोक्तम् । एवंसतिसंपूर्णतायारूपमितायाएवन्याय्यत्वेनसर्वेषांसमुच्चयेन फलनिर्णयेप्राप्ते ।

उपपत्तिस्तैराशिकत्रयात्मकेनसप्तराशिकेनयदिसंपूर्णवर्गस्थबलेसंपूर्णेवर्गेशबलेसंपूर्णेवर्गस्थवर्गेशशुभाशुभफलघातरूपेकथि-तेष्टकष्टेचसंपूर्णंरूपंफलंतदास्मिन्वर्गस्थबलेस्मिन्वर्गेशबलेस्मिन्-वर्गेशवर्गस्थफलघातरूपेकथितेष्टकष्टेचकिमिति । पञ्चसप्त-नवराशिकादिकइत्यनेनवर्गस्थवर्गेशबलकथितेष्टकष्टघातोरूपेणभाज्यइतिनिष्पद्यते । तत्राचार्येणबलघातएवपूर्वंकृतः पश्चात्तेनप्रोक्तेष्टकष्टंगुणनियमित्युक्तम् । बलघातस्यमूलंतुप्रागिष्टकष्टेचेष्टोच्चबलघातस्येवचत्वभावाद्गृहीतम् । पूर्वंयथाचेष्टोच्चफलयोःसमुच्चयेघातमूलमुक्तं यथाचवर्गस्थवर्गेशफलयोःसमुच्चयेघातउक्तस्तथात्रापिघातमूलंजातस्यकिमितिनोक्तमित्येतद्ग्रन्थपरिशीलनवतांशङ्कास्यात्तन्निवारणार्थंतत्वभावाच्चवर्गस्थवर्गेशबलयोःसमुच्चयेघातमूलमुक्तं तेनचेष्टकष्टसमुच्चये गुणानमुक्तमितिमिश्राःप्रयोजनमाहुः । वस्तुतस्तुइष्टेचेत्सामान्यतआधिक्यंवर्गस्थवर्गेशबलघातमूलेनगुणनेपितस्मिन्नेवाधि---क्यंकष्टेचेत्दाधिक्यंतदातस्मिन्नेव । यावदाधिक्यपक्षेपीष्टकष्टयोःसंपूर्णरूपान्तरस्यलेवर्गस्थवर्गेशबलघातमूलतुल्यमन्तरंभव-ति । ततोघातमूलेनसंपूर्णपादषष्टयंशकल्पनायापूर्ववदेतयो-र्नकोपिविशेषोतोबलघातमूलेनगुणनाव्यर्था । एवंसत्यपिचेष्ठ-

कष्टगुणितव[illegible]घातमूलेनगुणनमाहुस्तदतीवव्यर्थम्। एवमस्य गुणनस्यव्यर्थत्वेपिप्राग्वत्प्रयोजनमूचुः। यत्तुप्रागुक्तमिष्टकष्टान्तरतुल्यंशुभाशुभफलान्तरमितितदुदाहरणंप्रदर्श्यतेबृहज्जातकेशनिर्घवस्यशुक्रफलम्। रविलग्नगतेऽमरारिपूज्येसुभगःस्त्रीविजितोरतःकुनार्योमिति वर्गस्थःशुक्रोवर्गेश:शनिस्तावतइपाधिकवीर्यस्तेनेदंशुभमशुभंचफलंसंपूर्णं पश्चात्संपूर्णतायामेवसुभगइतिशुभफलात्स्त्रीविजितःकुनार्यांरतइत्यशुभफलमेतावदधिकम्। ५। इष्टकष्टान्तरेक्षतेकष्टस्यैतत्तुल्यस्यैवावसीयमान। ४६। त्वात्। एवंचबुधस्यतत्त्वेवस्त्रिंशांशफलम्॥ मेधाकलाकपटकाव्यविवादशिल्पशास्त्रार्थसाहसयुताःशशिजेतिमान्याः॥ बुधस्यत्रिंशांशकोष्ठकेइष्टं। १। कष्टम्। १। एतदन्तरंत्। १। स्ववर्गस्थोवर्गेश्व। ४। रबुधस्यएवसप्तचमध्यबलस्तादि ८ दंशुभमपिमध्यमप्यस्तत्तेवकपटयुतात्मकादशुभफलाच्छुभफलंमेधाकलाकाव्यविवादशिल्पशास्त्रार्थसाहसयुतादिकमेतावदधिकम्। १ एवंसर्वत्रफलानांविचारोविधेयइत्यलमतिचापल्येन। स ८ वासनायाममकारिवृत्तिर्दिवाकरेणामलकेशवोक्तेः॥ तत्रेष्टकष्टानयनाधिकारः समग्रसारः समगात्समाप्तिम्॥ १॥ इतिश्रीकेशवसांवत्सरोक्तजातककर्मपद्धतेष्टीकायांदिवाकरविरचितायां प्रौढमनोरमाभिधायां सवासनायामिष्टकष्टाध्यायश्चतुर्थः॥ ४॥

अथभावस्थानालोकयोगोद्भवंयत्तत्सर्वं तस्ययोग्यं दशायामितिबृहज्जातकोक्तेः सर्वेणापिफलेनदशास्वेवभवितव्यम्। दशाज्ञानन्त्वायुर्दायाधीनमेवं क्रमेणयदायुर्ज्ञानंजातकफलप्रयोजकमतस्त्वायुर्दायाध्यायआरभ्यते॥ तत्रायुर्द्विविधं योगजङ्गणितागतञ्च। योगजमपिचतुर्धा। रिष्टजस्वारभन्नियतममितञ्च। त-

वरिष्टजस्योदाहरणम्। सिंहालिकुम्भस्थितसैंहिकेयोविलोकि-
तः क्रूरखगैर्यदिस्यात्॥ वर्षाणिसप्तैवतदीयमायुः प्रकीर्तितञ्ज्ञा
तकशास्त्रविद्भिः॥ परमायुषश्च, अनिमिषपरमांशकेविलग्ने श-
शितनयेगविपञ्चवर्गलिप्ते। भवतिहिपरमायुषः प्रमाणंयदिस-
हिताः सकलाः स्वतुङ्गभेषु। नियतस्य। लग्नाष्टमारीन्दुयुता-
नचेत्स्युः क्रूराः स्वभस्थायदिखेचरौद्वौ॥ बलान्वितावम्बरगौभ-
वेतांजातः शतायुः कथितोमुनीन्द्रैः॥ अमितस्यापि। गुरुशशि
सहितेकुलीरलग्ने शशितनयेभृगुजेचकेन्द्रयाते॥ भवरिपुसह-
जोपगैश्चशेषैरमितमिहायुरनुक्रमाद्विनास्यादिति॥ गणितागत-
मपिपञ्चविधम्। अंशजम्पिण्डजंनैसर्गिकंजीवशर्मोदितन्मिश्रञ्च
एतन्मिश्रमपिचतुर्द्धा॥ एवंद्वादशप्रकारमायुरितिव्यावर्णयन्त्या-
चार्याः। तथाचहोरामकरन्दे॥ आयुर्मुनीन्द्रैर्द्विविधंप्रदिष्टंयो
गोद्भवञ्चानियतास्यमेतत्॥ आद्यञ्चतुर्भेदविभिन्नमाहुरन्यत्तथा-
पञ्चभिरत्रभेदैः॥ १॥ रिष्टंपरंनियतममततामितञ्चभेदाभवेयु
रितियोगसमुद्भवस्य॥ पैण्डन्तथांशजनितञ्चनिसर्गमन्यत्स्पमांश-
मिश्रमितिचानियतस्यभेदाः॥२॥ चन्द्रार्कयोश्चन्द्रविलग्नयोश्च-
लग्नेनयोः सूर्यविधूदयानाम्॥ साम्येबलानामितिमिश्रभेदा-
दायुर्भवेद्वादशधैवमत्रेति॥ ३॥ तत्रयोगजायुर्दायभेदस्यामिता
युर्दायस्योदाहरणान्तावदृश्लोकेनाह॥

## कर्कीन्दीज्ययुतोदयेबुधसितौकेन्द्रेचा
## रीशेतरैरायुर्विद्यामितंह्वियोगजमि-
## हान्यत्रोच्यतेथोन्मितम्॥ * * *

कर्कीकर्कराशिः। इन्दुश्चन्द्रः। ईज्योबृहस्पतिः। एभिर्युत-

स्वासावुदयस्वसतथा । तस्मिन्कर्कीन्द्रीज्ययुतोदये । कर्कलग्ने चन्द्रगुरुसहितइत्यर्थः । केन्द्रेलग्नचतुर्थसप्तमदशस्थानरूपेष्व द्विबुधसितौमिलितौपृथग्वाभवतः । व्ययश्चारयश्चईशश्चास्त्वरीणां । व्ययस्तृतीयंस्थानम् । अरयः षष्ठम् । ईशाएकादशम् । एषुस्थानेषुइतरैः सूर्यभौममन्दैः दृष्टास्मिन्योगेऽमितमायुर्विद्धि । जानीहीत्यन्वयः । क्रियाबलाद्गणकेत्यध्याहारः । अन्यत्रग्रन्थान्तरेयोगजमायुर्विद्धि । अत्रतुग्रन्थेऽन्मितंगणितागतमायुरुच्यते । मयेतिशेषः । योगजमित्यत्रसामान्यशब्दोविशेषपरइत्यमितायुर्दायातिरिक्तंयोगजमितिव्याख्येयम् । एतदर्थोपलक्षणायैवहिशब्दोदत्तइतिबोध्यम् । अन्यथामितायुर्दायस्ययोगजायुर्दायान्तर्भूतत्वमापद्येत । तथासतियोगजमायुस्तुर्द्धा । रिष्टपरनियतामितभेदादितिहोरिकोक्तं दत्तजलाञ्जलिस्यात् । योगजमिवान्यत्रोच्यतेइतिपाठेऽस्मिन्योगेऽमितमायुर्विद्धि । किमिवअन्यत्र ग्रन्थान्तरेयोगजमिव । योगजमित्यत्रप्राग्वद्विशेषपरता । तथाचग्रन्थान्तरादमितायुर्दायव्यतिरिक्तं योगजमायुर्जानीहि । तद्वदेवात्रयोगेमितमायुर्जानीहीतिभावः । अत्रामितायुर्दायस्ययोगजायुर्दायौपम्यंज्ञानांशएवयद्वात्रयोगेमितमायुरिवग्रन्थान्तरेयोगजमायुर्विद्धीतिइवशब्दस्यभिन्नक्रमयोजनार्थ । सार्धायान् । अथगणितागतायुरानयनंविवक्षुस्तावत्तद्देदस्याद्यायुर्दायस्योपयोगिभूतान्चेष्टागुणोच्चगुणस्पष्टगुणान्वक्तोत्तरार्द्धेनाह ॥

चाल्पश्चेत्किरणाःसरूपकिरणाङ्घ्रि श्चेच्चयोर्ध्वाविभूगोर्द्ध चैष्टिकतुङ्गसंभव गुणौतद्घातमूलंस्फुटः ॥ १६ ॥

स्पष्टोऽर्थः । घातमूलप्रक्रियापूर्वाधिकारोक्तावोध्यम् । अत्रो

पपत्तिः । लघुजातके । शत्रुक्षेत्रेऽस्तंगतो नीचेऽर्द्धं सूर्यलुप्तकिरणाश्च । त्यजन्तिह्यायुर्द्दायात् । अस्तंयातौ रविजशुक्रौ त्र्यंशमायुषि परमोच्चे-ष्वितयगुणा परमनीचेऽर्द्धं हानिः । दर्शितरीत्या चेष्टापरयोर्वक्रास्तपदयोर्द्वयोरपिसत्त्वात्तत्र परमचेष्टाकाले शून्ये चेष्टाकेन्द्रेऽर्द्धं हानिषड्भमितेऽत्रयं गुणः । ततोऽर्द्धहानिमारभ्य हान्यभावपर्यन्तमेकं त्रैराशिकं ततो गुणोपचयेन त्रिमितगुणपर्यन्तं द्वितीयं त्रैराशिकेन गुणने हान्यभावे च तदेवायुस्तिष्ठतीत्येकगुणस्थानं हान्यभावस्थानं चैकमेव । तत्र शून्यचेष्टाकेन्द्रान्नीचाच्च षड्भान्तरे त्रिमितगुणस्थानमतः कारणादर्थादेकगुणस्थानं राशिद्वयान्तरे । हानिरपि परिणामे गुणात्मिकैवेति शून्यचेष्टाकेन्द्रे नीचे चार्द्धगुणः । अथ शून्यचेष्टाकेन्द्रे नीचे चैको रश्मिस्ततोऽग्रतो रश्मिद्वयोपचयेनार्द्धं गुणोपचयस्ततोऽनुपातः । यदि रश्मिद्वयेन रूपार्द्धं गुणास्तदा विरूपकिरणातुल्यैः शून्यचेष्टाकेन्द्रनीचाग्रिमरश्मिभिः किमिति विरूपकिरणाङ्घ्रिगुणाद्रूतिजातम् १ र १ । अयं रूपार्द्धमितगुणे समच्छेदविधिना योज्यस्तत्र समच्छेदौ ४ रू १ र १ । रू २ अत्र रश्मियुद्वयं योज्यम् । एकः शोध्योऽतः सरूप ४ किरणा ४ ङ्घ्रिगुणाद्रूत्युपपन्नम् । इदं साधनं रूपचयाल्पराशिषु ज्ञेयम् । अथान्योऽनुपातः । यदि रश्मित्रयाधिकरश्मिभिस्त्रितुमिते द्विमितगुणास्तदेष्टै रूपत्रयोनरश्मिभिः किमिति । अत्र गुणहरौ द्वाभ्यामपवर्त्यं जातम् । रू । ३ रू । १ । अत्रैकगुणः समच्छेदविधानेन योज्यस्तत्र समच्छेदौ । २ । रू । ३ । रू १ । २ । अथ रश्मियुद्वयं योज्यं त्रयं हेयम् । तत्रानयोरन्त । २ । । २ । रेरूपनेवर्गमवशिष्टमतो विरूपकिरणार्द्ध गुणाद्रूत्यपियुक्तम् । अथ स्फुटगुणोपपत्तिः ॥ गर्गः ध्रुवायहानिःकर्तव्या ततोन्यासु बह्वप्यपि ॥ प्राप्ता स्वैक्यैवकर्तव्या यास्त्वास्तासु महत्तरा ॥ १ ॥ ततोऽपि गुणनाकार्या ह्येकैव महतो सकृत् ॥ द्वाभ्यां-

वर्गोत्तमेस्वांशेस्वद्रेष्काणेस्वकेगृहे ॥२॥ त्रिभिर्वक्रगतस्याथस्वोच्चराशिगतस्य च ॥ समगुणस्थले एकान्यतरैव गुणना कार्या। विषमगुणस्थले महति सकृद्गुणना कार्या तदेतदर्थं लाभायैव सकृत्पदं पुनरुपात्तम्। अत्र त्रिगुण एव महद्गुणस्तन्निगुणमिति विहाय महत्पदोपादानस्यानिर्बंधेनाचार्यकरणं तु बहुत्वतायामेकं तु यद्भूरितदेवकार्यमिति वराहवाक्ये भूरिपदग्रहणस्य चेदं तात्पर्यम्।

यन्निगुणत्वे नो नाग्रहः किंतु युक्तिसिद्धमेकं भूरिगुणनं कार्यम्। युक्तिसिद्धं तु मूलेन गुणनम्। विषमगुणस्थले च स्वल्पादन्यतरस्मान्मूलमपि भूरि भवत्येव। लघुजातके। वर्गोत्तमस्वराशिद्रेष्काणनवांशके सकृद्विगुणम् वक्रोच्चयोस्त्रिगुणितं द्वित्रिगुणत्वं सकृत्त्रिगुणम्। अस्यार्थो मिश्रोक्तः वर्गोत्तमादिवशाद्बहुवारं द्विगुणत्वप्राप्तौ सकृदेकवारं द्विगुणं कार्यम्। वक्रवशेनोच्चवशेन च त्रिगुणत्वे प्राप्ते सकृत्त्रिगुणितं कर्तव्यम्। अत्रान्यगुणप्राप्तावेतयोरेव प्राप्तावन्यतरगुणनियमनावश्यकत्वे सकृत्पदानुषङ्गश्चावश्यकः। वर्गोत्तमेत्याद्युक्ते सकृद्द्विगुणे व्यवहारार्थं भाश्रयगुणेति धृतसंज्ञे प्राप्ते वक्रोच्चयोरित्याद्युक्ते सकृत्त्रिगुणे स्फुटगुणकसंज्ञे च प्राप्ते सकृत्त्रिगुणे भूरिगुणं कर्तव्यमिति। अत्र वक्रोच्चगे सामान्यतस्त्रयाणां वर्गेण गुणने प्राप्ते ऽन्यतरस्मिंस्त्रिमिते गुणके नियमितेर्थान्मूलेन गुणनमुक्तं पदस्य वर्गस्य त्रयो मूलं किंच प्रकृते त्रयाणां वर्गेण सामान्येन गुणने प्रसक्ते ऽन्यतरस्मिंस्त्रिमितगुणनियमनलक्षणो विशेषउक्तः विशेषे च सामान्यसंबन्धस्यावश्यमपि चेति विशेषलक्षणे ऽन्यतरत्रिमितगुणे सामान्यवर्गस्य तन्मूलत्वमेव संबन्धः। तथा सति तन्मूलत्वपुरस्कारेणैव गुणने प्रसक्ते तन्मूलेनैव गुणनं तात्पर्यतः सिद्धम्। विषमद्वयघातोपि करणीरूपो वर्ग एव भवतीति द्वित्रिगुणत्वे स्फुटगुणाश्रयगुणघातस्थलेपि मूलेनैव गुणनमागतम्। यत्तु बहुताडनसंप्राप्तौ या-

करोत्येकवर्गं वामवराहमिहराचार्यव्याख्यानदृष्टापुगतनैरितिसारावलीशाक्यखरस। इह राहमतं दूषयता केशवार्केणापृथगपिद्विगुणेत्रिगुणसक्तत्रिगुणमित्यवह्नक्तिरियं यतइति विषाहवृगदावने ऽभिधायितगर्गादिमुनिग्रन्थविरोधादसदेवेतिबोध्यम् । अथाश्रयगुण-कमाह ॥

**यःस्वाधीष्टसुहृत्समार्यधिरिपोर्वर्गेधृतिस्त्रेष्विलाविश्वाङ्कपुगुणाग्रहेद्विगुणितायोगःक्रमात्तं हरेत् । तङ्कपङ्कसुगोशुमङ्तिजिनैःषड्घ्नैस्ववर्गोत्तमस्वांशत्र्यग्नगतेसदारसगुणैःस्यादाश्रयाख्योगुणइति ॥ १७ ॥**

योग्रहःस्वाधीष्टसुहृत्समासर्यधिरिपोर्वर्गे गृहादिसप्तवर्गेस्यात्तस्य धृतिरिष्विलाइत्यादयोङ्काःक्रमात्स्थाप्याःचकारेणवर्गे इत्यनुषङ्गः स्वादीनांयस्मिन्गृहादौवर्गे ग्रहः स्यात्तत्रवर्गे धृत्यादयोङ्काः क्रमात्स्थाप्याइत्यर्थः । स्वस्यअधीष्टसुहृच्चसमस्यअरिस्यअधिरिपुश्च-एषांद्वन्द्वैकत्वंक्लीबताच । उक्तपुंस्कत्वात्पुंवद्रूपम् । धृतिःषट्-दश । ष्विलाः पञ्चदश । इराभूवाक्सुराप्सुस्यादितिरान्तेषुपाठाद्रेफान्तएवेराशब्दोनतुलान्तइतिकश्चित् । तन्मन्दम् । अस्ति-चलान्तोपीलाब्दशः । भूगोवाचस्त्विडाइलातिविश्वाण्डोमरणात् । इलाकलचेसौम्यस्यधरित्र्यांगविवाच्चिचेतिमेदिनीकोशाच । प्रहृष्टपुष्टाखिलगोकुलामिलामितिभास्करोक्तिरप्यनुकूला । विश्वेत्रयोदश । अङ्कानव । इषवः पञ्च । गुणास्त्रयइति ।

ग्रहैर्ग्रहवर्गे धृत्वा ये द्विगुणिताः स्थाप्याः । यथा स्वग्रहेषट्त्रिंश-द्धिभिश्चग्रहैर्त्रिंशदित्यादि तेषां सप्तसु वर्गेषु स्थापितानामङ्कानां योगः कार्यः । तं योगं तद्ब्धे तेषां स्वाधीष्टादीनां मेराशौ ग्रहैस-तिक्रमात्पड्वस्वित्यादिभिरङ्कैः षड्घ्नैः षड्गुणितैः हरेत् । भजेत् । गणकद्दतिशेषः । षट्प्रसिद्धाः वसवोष्टौ गावो नव यंशुमन्तो द्वा-दशधृतयोष्टादश जिनाश्चतुर्विंशतिः एभिः षड्घ्नैरङ्कैस्तं योगं-भजेदित्यर्थः । क्रमादिति काकाक्षिगोलकन्यायादुभयत्र संबध्य-ते । वर्गोत्तमस्वांशत्र्यंशगते ग्रहेसद्भारसगुणैः षट्त्रिंशतातं यो-गंहरेत् । यंशास्त्र्यंशाःस्वयंशत्र्यंशाः । स्वस्यत्र्यंशत्र्यंशाः स्वांश त्र्यंशाः वर्गोतमाश्च स्वांशत्र्यंशाश्च वर्गोत्तमस्वांशत्र्यंशाः । यत्र राशौ ग्रहस्तस्यैव राशेर्नवमांशे चेद्भवेत्तदा सनवमांशो वर्गोत्तमांशः । तदुक्तम् । राशिर्यः स्यात्सोपि नन्दांशकश्चेदुक्तस्तस्मिन्नेव वर्गोत्त-मांश इति । सचकस्मिन्राशौ कतमो भवति । तदुक्तं बृहज्जातके । वर्गोत्तमाश्चरग्रहादिषु पूर्वमध्यपर्यन्तगाःशुभफलानवभागसं-ज्ञा इति । स्वांशःस्वराशिनवभांशःस्वत्र्यंशःस्वराशिद्रेष्काणास्तेषु वर्गोत्तमादिषु गतेवर्तमाने ग्रहे षट्त्रिंशता भजेत्न तु प्रागुक्तहरेणेत्य-र्थः । एवं हरेण भजने यल्लभ्यते रूपादि सआश्रयनामा गुणो भवेत् । अथैवं सिद्धस्याश्रयगुणकस्य कदाचित्संस्कारमाह ॥

चेद्वर्गोत्तमपूर्वगोध्यरिसुहृद्भे तद्ग्रहाङ्का-न्चिषड्लब्ध्योनोयुगरिष्टभेध्विनवकाप्त्या स्वेसमेकेवलः । कार्यस्त्वाश्रयकःस ॥

चेद्ग्रहो वर्गोत्तमपूर्वगःवर्गोत्तमनवमांशस्वनवमांशस्वद्रेष्का-णान्यतरस्मिन्वर्तमानः सन्नध्यरिसुहृद्भे अधिरिपोरधिमित्रस्य-वा गृहे भवेत् । ततस्तदा ग्रहाङ्कात्पूर्वं ग्रहवर्गे स्थापिताद्ङ्कात्त्रिष-

न्निर्लब्धाप्राप्तफलेनसत्त्वाश्रयकः उन्नेयुक्तकार्यः आश्रयएवआ-
श्रयकः स्वार्थेकप्रत्ययः। आश्रयगुणकइत्यर्थः। षेद्वर्गोत्तमपूर्वगः
सन्नरिपुटभेशत्रुराशौमित्रराशौवास्यात्तदाग्रहाङ्कादब्धिनवकै-
स्तुर्नवत्याआप्यालब्धेनउनयुक्तार्यः। एतदुक्तं भवति। मित्रा
धिमित्रगेहयोर्ग्रहाङ्कात्रूहरेणफलंपुरानीताश्रयगुणयुक्तं का-
र्यम्। अधिशत्रुशत्रुगृहयोस्तुहीनंकार्यमिति। अत्रोपपत्तिः। वर्गो-
त्तमस्वराशिद्रेष्काणनवांशकेसत्कृद्विगुणमितिलघुजातकोक्तं वर्गो
त्तमादौद्वितयंगुणइत्युपपन्नम्। रिपुराशौत्रिभागोनमितिसा-
रावल्यामभिहितत्वाच्छत्रुराशौत्र्यंशहानिः। छेदघ्नरूपेषुलवा-
धनर्णमेकस्यभागाअधिकोनकाश्चेदितिपाटीसूत्रेणतत्रस्थहारेणे
त्यादिनावासमच्छेदसूत्रेणवासिद्धेनत्र्यंशोनरूपगुणेनत्र्यंशहा-
निरेवभवतीतित्र्यंशोनंरूपं २ गुणः अधिशत्रुराशौअर्द्धशत्रुत्व-
स्याधिक्यात्स्वर्द्धसहितत्रती ३ यांशस्यप्रागुक्तसूत्रैः सिद्धस्यार्द्धात्म
कस्यक्षासः अयंरूपाच्च्युतोजातोधिशत्रुराशावर्द्धमितोगुणः एवं-
मित्रराशौयुक्त्यात्तृतीयांश । १ । स्ववृद्धिः तत्रस्थहारेणेत्यादि-
नासिद्धेनत्र्यंशाधिकरूपे । २ णगुणेनत्र्यंशोरचयएवभवतीति
सत्र्यंशंरूपंगुणः । एवम । ४ । धिमित्रतायाआधिक्यात्स्वार्द्धयु
तत्र्यंशस्यपूर्वसूत्रेणसिद्ध । ३ । स्वार्द्धात्मकस्यवृद्धिः। इयंरूपा-
न्विताजातोधिमित्रराशौ। ३ । गुणः समगृहेसमोर्द्धमित्रमर्द्ध-
शत्रुश्चेतिपक्षे द्वमित्रत्वाधा २ । वतोवृद्धिरर्द्धशत्रुत्वात्तावतो-
हानिरितिहानिवृद्ध्योर । १ । भावाद्रूपंगुणः समोनमित्रं न-
शत्रुरितिपक्षेपिनवृद्धिर्नापिहानिः। अतोरूपमेवगुणइतियु-
क्तम्। लघुजातकेसारावल्यामप्यंशायुषिशत्रुराशौवक्रं विहाय-
हानिः स्यादितिनोक्तम्॥ क्वचिदुक्तमप्यस्ति। तन्मतभेदेनपूर्वम
तमेवाङ्गीकृतमितिप्राञ्चः। अथशत्रुमित्रादिराशौस्वनवांशेस्वद्रे

ष्काणे वास्थितेस्वराशौ चनुमित्रादीनानवांशे द्रेष्काणे वास्थितेप
इसामान्यप्राप्ते गुणे राशिनवांशद्रेष्काणकृततारतम्याद्वैलक्षण्यं
युक्तमेवं होरादितारतम्यादपि । समग्रएवगुणे सप्तवर्गकृततार-
तम्यविधिस्वीकारेत्यन्तायुक्ता बहुवर्गगैवस्थादत: कारणाद्विभक्ते
एकस्मिन्गुणेराश्यादिस्थानेषु विभागेनावस्थानमागतम् । इह-
होरादय:षट् समाएवराशिस्तु होरादिवर्गाद्विगुणं गृहमिति यवन
वाक्यं द्वैगुण्यमस्तीत्यष्टौवर्गास्तेनाष्टमांशे गुणो होरादिवर्गेषु ।
अयमष्टभक्तो द्विगुणश्चतुर्भक्तगुणात्मको गुणोराशिस्थाप्यइतिसि
द्धम् । अत: सम्यगुक्तं श्रीपतिभि: वर्गीत्तमेस्वभवनेस्वनवांशके-
चस्वल्यं शकेचगणको द्वितयं निरुक्त: । अध्यर्द्धरूपमधिमित्रगृहेसु
हृन्नेसल्यं शकं समगृहेखलु रूपमेव ॥ १ ॥ त्र्यंशो नितं रिपुगृहेध्य
रिभेदलंस्यादेष्योगुणोभवति य: खलु कश्चिदेक: । वेदोद्धृत: स-
भगुणोगणकैर्निरुक्तोहोरादिवर्गगुणकस्तुभवेत्तदर्द्धमिति । २ ॥
अथाधिमित्रस्यस्वमित्राभ्यांसमादर्द्धन्यूनत्वाद्वाधिकत्वमितिपूर्वयु
क्त्यास्वगृहमित्रगृहगुणयोरन्तरयो २।४ रन्तरार्द्धे स्मिन् १ स्वगृह
गुणादूनेमित्रगृहगुणेवायुक्तेजा १३ तोऽधिमित्रसंब ३ न्धिनि-
सप्तवर्गेगुण: ५ मित्रसंबन्धिवृद्धिर्निजार्द्धसहिताऽधिमित्रसंब-
न्धिवृद्धिरवधि ३ त्रैराशिकविधिनालतीयांशोनाधिमित्रसंबंधिवृद्धि-
र्मित्रसंबंधिवृद्धिर्भवतीत्यधिमित्रसंबन्धिवृद्धिरियं २ स्वतृतीयां-
शेनानेन २ ऊ नाजातामित्रसंबन्धिवृद्धिरनया ३ प्रा ४ त्वद्गु-
णोयंमि ८ त्रसंबन्धिनि १३ निसप्तवर्गे समसंबन्धिनि ८ तुल्य-
वमेव । मित्राधिमित्रयो ८ र्यावतोवृद्धिस्तावत्येवामित्राध्यमित्र
योर्हानिरितिजातौशत्रुसंबन्धिनिचाधिशत्रुसंबन्धिनिसप्तवर्गेक्र-
माद्गुणौ ५।१ । समसंबन्धिनि द्वितयं गुणोस्त्येव । एवंसिद्धेराश्या-
दिसप्त ८।३ स्थानस्थगुणाएभिर्गणकैर्गणनीयाइत्युपपन्नम् ।

अतएवोक्तम् । गृहादिकेवर्गगणेस्वकीयेद्विकोणगस्त्र्यंशविवर्जि-
तः सः । अधीष्टभेमित्रगृहेनवांशाविशेच रूपं चसमस्यगेहे । १
नवांशकाः पञ्चविरोधिराशौगुणांशकाः स्यादधिवैरिणोभे । पू-
र्वंभपूर्वांगुणकायउक्तावर्गेषुमप्तस्त्विहगुणाख्यसंज्ञाः । २ गुणघ्ना-
गुणैः स्वैरधिकारलब्धैरुक्तैर्गुणाः स्यादथमिश्रितैस्तैः । स्मृतोबु-
धैराश्रयसंज्ञितोयमिति । यत्ववर्गोत्तमस्वनवमांशस्वद्रेष्काणा-
न्यतमवशान्मुख्योद्विगुणः प्राप्तस्तवशत्रुक्षेत्रेत्र्यंशमित्यादिनाज्ञा-
तकवाक्येनशत्रुभेहानिः परिणामेनगुणात्मिकार्थान्मित्रभादि-
षुवृद्धिरपिप्राप्तातदत्रैकाश्रयगुणसिद्ध्यर्थंसंपूर्णोद्विमितगुणेयथा-
प्राप्ताहानिंवृद्धिंवाविधायपश्चादस्यराश्यादिसप्तस्थानपतनादिवि-
धिरितिप्राप्तौमत्यासुच्यते ।

इयंहानिर्वृद्धिर्वापरिणामेनगुणात्मिकास्तीतिराशिवशाद्व-
र्गोत्तमादित्रिकान्यतमवशाद्द्विगुणद्वयेप्राप्ते आचार्यकर्तृकंतुबहु-
घ्नतायामेकंतुयद्गुरितदेवकार्यमितिवाक्येनपुनः सकृद्गुणकस्य-
नियमनाद्धानिवृद्ध्यात्मकगुणकस्यबाधः प्राप्तः जातकेहानिवृद्धि-
त्वपुरस्कारेणोक्तत्वाद्बाधोपियुक्तस्तद्बाधोबाधस्ययथास्यात्तथा-
प्राप्तेचराशिवशाद्धानिवृद्धिः प्राप्तास्तीतिराशिस्थानस्यराशिगु-
णमात्रेनियोज्य । राशिवशाद्धानिवृद्धिस्तुराशिस्थानस्यराशिगु-
णभावेहोरादिवशाद्धोरादिस्थानस्थहोरादिगुणेषुतारतम्यसि-
द्धसप्तवर्गगुणकलक्षणानियुक्तैवास्ति । एवमबाधः सार्थकः ।
बाधस्तुराशिगुणातिरिक्तहोरादिस्थगुणेषुसार्थकः । ततोगुणत्वे-
नपरिणतयाहानिवृद्ध्याराशिस्थराशिगुणंगुणयित्वापुनरावश्यक-
त्वेनतारतम्यप्राप्तसार्वदिकगुणैर्गुणनमितिसिद्धम् । स्वराशिस्थे-
वर्गोत्तमादित्रिकान्यतमस्थेच ग्रहेराशिवशाद्वर्गोत्तमादिवशाद-
पिद्विमितगुणप्राप्तौसकृद्गुणनमितिवाक्येनैकस्यैवगुणकस्यनिय-

मनादपरद्विगुणाख्यसर्वथाबाधएवतदिहनैवपुनर्गुणनमितिबोध्य-म् । अथैवंराशिस्थानस्थगुणमात्रे पुनरधिमित्रादिगुणकामेच्छा-यांप्रथमगुणकैर्वागुणनीयमितिसंदेहादेकतरपक्षानवलम्बियुक्त्या गुणकान्तराणिसाध्यन्ते । यथाप्रथमो । ३ । धिमित्रगुण द्विती-यः अत्रयदिगुणयोरनयोरेकाकारता । २ । भविष्यत्तदान्यतरे-णैवचरितार्थताजातास्यादिदांनीत्वन । ५ । योरेकाकारतायु-क्त्यायोगार्द्धे विश्रान्तेतिक्रमिकयोरन । ३ । योर्योगार्द्धं गुणोयु-क्तः अन्यच्च प्रथममित्रगुणात्प्रथ १।९ । मोऽधिमित्रगुणः सिद्धो द्वितीयसिद्धोजातायामधिमित्र १।२ संबन्धिवृद्धिस्तृतीयांशोना मित्रसंबन्धिवृद्धिरित्यधिमित्रवृद्धेस्तृतीयांशेमित्रगुणेयोजितेसत्यधि मित्रगुणोभवतीतियुक्त्याधिमित्रसम्बन्धिर वृद्धिरस्यास्तृ २ तीयां शोयद्यधिमित्रगुणानपेक्षेप्रथममित्रगुणे ३ स्मि ४ न्नेवयो ९ ज्यतेत दयमप्यपरोधिमित्रगुणोयुज्य १४ तएवंपुनर ३ पिगुणद्वयेसंदे-हतादवस्थ्याद्नयोर्योः १९।१४॥९गार्द्धसूक्ष्मोयमेकोधिमित्रगुणः सिद्धः ११३ अत्रहा १२।९ रांशयोर्द्विसप्ततिसप्तमांशेन ७२ अ पवर्ते ७२ कृतेलब्धाहरस्थानेसप्त ७ अंशस्थानेस्वल्पान्त ७ रमु पेक्ष्यप्राप्तएकादश । एवमयंगुणोऽधिमित्रराशौ ११ अस्यद्व-द्या ४ स्वल्यंशोनया ८ प्राग्वद्द्वयंमित्रगुणः २९।२१ ७ समगुणो रूप ७ मेव १ मित्रा २१ धिमित्रयोर्यावतीवृद्धिस्तावत्येवामित्राध्य मित्रयोर्हानिरितिशत्रुग्रहगुणा १३ धिशत्रुगुणौ ३ ऽतःसुष्ठूयुक्तं श्रीपत्याचार्यैः । नगांशकारुद्र २१ मिताअधीष्ट ७ राशौसुहृ-द्वेश्मनिमूर्च्छनांशाः । नवाश्विनोरूपमुदासराशौकुह्यं शक्राविश्वमिताद्विषड्भे ॥ त्र्यंशोनगांशाद्यधिपाल राशावेतेभमध्यानि-जराशिवर्ज्जम् ॥ वर्गोत्तमात्मीयनवांशहक्कस्थितेग्रहेतुद्वितयंगुणः स्यात् ॥ एतैरधीष्टादिगुणैर्निहन्यादुदीरितंराशिगुणंपुनस्तमि-

ति ॥ इत्याश्रयगुणोपपत्तिः सुन्दरमिश्रोदिताः ।

प्रकृतमनुसरामः । स्वगृहेगुणाङ्कः २ वेदोद्धृतः सभगुणोग-
णकैर्निरुक्तोऽहोरादिकवर्गगुणकस्तुभश्चलदर्द्धमित्युक्तेरयमष्टभक्तो १
तः अयमनन्तरताडकेनाद्विकेनगुणितोजातः स्वसंबन्धिनिहो ४
रादिषड्वर्गगुणः १ अत्रांशहारावष्टादशभिर्गुणितौजा १८तोयंस्वहो
रादिषड्वर्गेगु २णः एवमधिमित्रस्वगृहेगुणः ३ अष्ट ३६ भक्तः ३
अनन्तरताडकेन ५ गुणितोजातो १५ । २ धिमित्रसंबन्धि १६
होरादिषुषड्वर्गे ३ गुणः एवंमित्रगेह ४८ गु ४ णोष्टभक्तो १ नन्तर
गुणेन १३ गुणितोजातोमित्रसंबन्धिनिहो ३ रादिष ६ ड्वर्गगु-
णः १३ । ९ एवंसमगृहगुणोष्टभक्तोऽनन्तरताडकेनगुणितोजातः
१।५४ एतस्यहरांशयोर्नवभिर्गुणनेजातोगुणः ९ एवंशत्रुगृहगु-
८ णो २ ष्टभक्तो १ नन्तरताडकेन ५ गुणि ७२ तोजातः शत्रु
संब ३ न्धिहो १२ रादिवर्गेगु ९ णः ५ एवमधिशत्रुगृह
गुणो । १ ष्टभक्तो १ नन्तरताकेन १ । १०८ गुणितोजातः १
अत्रांश २ हरयो १६ स्त्रिभिर्गुणनेजातोधिशत्रुसंबन्धिनिहो ४८
रादिषुड्वर्गगुणः ३ एवमेतेगुणाः स्वाधिमित्रादिगृहस्थेग्रहेस
तिस्वाधिमित्रा १४४ दिसंबन्धिहोरादिस्थानीयाआगताः । एव
मन्यराशावन्यहोरादिस्थेग्रहेतएवगुणकाः स्थाप्याः । राशिगुण
स्यार्द्धंहोरादिगुणइतिराशिस्थानेतु द्विगुणाः स्थाप्याः । पश्चात्त-
षांयोगेकृतेचाश्रयगुणकोभवतीत्युपपन्नम् । दर्शनम् । ननुनक्ष-

| स्व. | अधि | मि. | स. | श. | अ. | । त्रिराजनिर्देशोयं |
|---|---|---|---|---|---|---|
| १८ | १५ | १३ | ९ | ५ | ३ | । नस्वसमाधिवैरिसं |
| ३६ | ४८ | ५४ | ७२ | १०८ | १४४ | । बन्धिहोरादिगुणा |

नामेवहारांशाः क्रमेणाष्टादशनवत्रिभिर्गुणनीयाअन्येषांतुनह-
न्तव्याद्वितियस्मादष्टादशादिभिर्गुणनंव्यर्थम् । नचयावानेवाष्टा-

दशानांषट्त्रिंशदंशस्तावदेवरूपस्यार्द्धमित्यादिफलविशेषाभावा-
दष्टादशादिभिः स्वादिगुणहारांशगुणनंसार्थकमेवेतिवाच्यम् ।
गुणान्तरेऽपिसमाङ्केनहारांश गुणनेफलावैचित्र्यदर्शनादुक्तदोष-
तादवस्थ्यात् । तस्मादष्टादशादिभिः स्वादिगुणहारांशगुणानां
हारांशगुणनंगौरवान्निष्प्रयोजनत्वाच्चव्यर्थमेव । अस्तुवास्वसमा-
धिश्चतुर्गुणकानामेवसमाङ्केनहारांशगुणनम् । परन्तुअष्टादशा-
दिभिरेवहरांशाहन्तव्याइतरैर्नहन्तव्याइत्यपिशिष्यबन्धनमात्र-
म् । किञ्चमित्रराशौमित्रहोरास्थेग्रहेयावान्होरास्थानीयोगुणा
१२ स्तावानेवशत्रुराशावपिमित्रहोरास्थेग्रहेगुणः स्यादित्युक्तं
५४ तदप्यसङ्गतम् । यतस्तत्रशत्रुराशिमित्रहोराजन्येनगुणान्त-
रेणभाव्यम् । अन्यथामित्रादिगुणसाधनप्रयासवैयर्थ्यापत्तिः ।
अपिच । सप्तवर्गस्थापितानांसर्वेषांगुणकानांयोगः कार्यइत्यु-
क्तं तत्रपृच्छते । किंसर्वेगुणकाः सदृशच्छेदाविसदृशच्छेदावा
आद्येकिंसार्वत्रिकाः कादाचित्कावा । नाद्यः । सर्वत्रसर्वगुण-
कानांसमच्छेदत्वस्यबाधितत्वात् । नापरः । भौमादीनांहोरा
धिपत्यभावात्पुष्यवतोस्त्रिंशांशाधिपत्याभावाच्चकादाचित्कस्या-
पिसमच्छेदत्वस्यासम्भवात् । नापिचरमः । असमच्छेदानांयो
गस्यायुक्तत्वात् । अन्यथायोगोत्तरं तुल्यहरांशकानामितिसि-
द्धान्तोव्याहन्येत ।

तस्मात्सप्तवर्गस्थगुणानामैक्यंकार्यमित्युक्तम् । अत्रकेचि-
त् । नह्येवयंसप्तवर्गस्थगुणकानांसमच्छेदत्वंब्रूमोयेनभवदुक्तोदो-
षः प्रसज्येत । किंतुविसदृशहराएवगुणास्तेषांसमच्छेदान्विधा-
ययोगः कार्यइतिवदामस्तेनसर्वंसमञ्जसमेवेति । स्यादेतत्सम-
च्छेदविधानेनयोगः कार्यइत्याचार्यैर्यद्युक्तंस्यात् । तस्मात्क्वय-
मेतदितिदुस्तरजातकार्णवसंदेहतरङ्गसङ्गभङ्गितहृदयाहोरिका-

मिथः परिभाष्यन्ते । तत्रक्रमः । यस्य राशौ ग्रहस्तस्यैव चेद्धोराद्रे-
ष्काणान्यतमवर्गः स्यात्तदा तत्र स्थापितावाधिनवगुणकौ अथ तद्गुणकराशि
गुणकयोः समच्छेदत्वाद्योगोपि युक्त एवेत्यत्र न कोपि विवादः । हो
रास्थगुणापि च यथा भगुणकस्यांशमात्रत्वे गुणये पि सदृशत्वमव्याहत
मेवेति हृदयम् । अथान्यराशावन्यहोरादिस्थे ग्रहे त्रैराशिकेन गुणा
न्तराणि यावत्साध्यन्ते तावत्त एव समानराशिहोराद्युक्तगुणा उत्प-
द्यन्ते किंतु राशिगुणहरतुल्यहरास्ततस्त एव गुणकाः स्थाप्याः सम-
च्छेदत्वाद्योज्याश्चेति सर्वमुपपन्नम् । सप्तवर्गगुणानां समच्छेदत्वे-
सिद्धे सर्वगुणकांशयोग एकेनैव हरेण भाज्य इति लाघवाद्गुणकांशा एव
स्थापिताः पश्चात्तद्योगो राशिगुणस्य हरेणैव भाज्य इति रूप्य-
गुक्तमाचार्यचरणैः । अत्रोदाहरणम् । रवेः सप्तवर्गस्वामिचक्रं सप्त
वर्गस्थगुणकचक्रं च अथ गृ हो द्रे स न द्वा । त्रि
शत्रुसम्बन्धिहोरादि बुधः चन्द्रः बुधः भौमः गुरुः भौमः बुधः
स्थोयंगुणो ५ द्वि शत्रुः समः शत्रुः अमि: समः अमि: शत्रुः
गुणो जातो १०८ गृहसम्बन्धिगुणः १० अत्रांशस्थानेष्वसन्तो
गृ हो द्रे स न द्वा त्रि । १०८ तितिस्थापिताः पश्चा-
१० ९ ५ १५ ९ १५ ५ । एषड्गुणाहृतिभिर्भाज्याङ्क-
तिसुष्ठत्वं द्रेष्काणत्रिंशांशयोरपि शत्रुसम्बन्धित्वात्तदापि ससम्ब
न्धिगुण ५ कः समाच्छेदत्वात्तद्योगोपि युक्त एवेति न किंचिद्विरुद्ध
म् । १०८ अथ होरास्थानस्थगुणः साध्यते । तत्र समराशिस्थे-
सति समहोरास्थो गुणः । ९ । अपेक्षितस्तु शत्रुराशौ समहोरायां
गुण इति शत्रुराशिपरिणा ७२ मोस्यन्याय्यः । तत्र त्रैराशिकम् ।
यदि रूपचतुर्थांशमिते समगृहगुणे यं होरास्थानस्थगुणो ९ ल-
भ्यते तदा रूपषडंशमिते शत्रुगृहगुणे कियानिति । अ । ७२ स
च्छेदं लब्धस्य परिवर्त्येत्यादिना जातोयं गुणः शत्रुराशौ समहोरा-

याम् । ९ । अत्रांशस्थानेनवातान्यराशावपिसमहोरायांन-
वैव । १०८ । स्थाप्याइत्युपपन्नम् । हरोपिराशिगुणस्यहरेण-
तुल्य इतिसमच्छेदत्वाद्योगोपियुक्तएव । किञ्चयदिपूर्वंसमसम्ब-
न्धिहोरास्थोगुणकोनवभिर्नगुण्यतेतदांशचुराशौसमहोरायां-
गुणः । २ । अस्यपुनाराशिगुणराशिगुणेनसाकंयोगेक्रियमा
णेनसा १२ । कंयोगेक्रियमाणेमिथोहराभ्यामितुल्यनेनसमच्छेद
त्वकरणमावश्यकम् । तत्तद्धाद्यभिरष्टोत्तरशतिपवर्तितेनवलब्धा
सैरूपहाद्दशांशमितिगुणकस्यहारांशुणेनेजातः सएवगुणः ९
एवमग्रेसमच्छेदत्वकरणावसरेसमग्रहगुणोभविष्यतीतिपू १०८
र्वमेवमहामतिभिराचार्यैर्नवगुणाःप्रोक्ताइतिनकोपिदोषइत्यवगच्छ
एवंस्वाधिवेरिगुणकयोरपिछतिलयांभ्यागुणनंनानर्थकमित्युदा-
हरणेनवोध्यम् । अथगतुराशावधिमितसप्तमांशगुणेनुपातेन ।
यद्येतावति ३ अधिमितग्रहगुणेयमधिमितसप्तांशगुण १५
स्तदागतग्रह ८ गुणेस्मिन् १ कियानितिच्छेदंलवंचवपरिव ६
र्त्यादिनाजातः १५ सएवगुणकोराशिगुणस्यहरतुल्यहरोतस्त-
एवगुणकाः स्था १०८ प्याः पश्चाद्राशिगुणस्यैवहरेणहरणीयाइ-
तिसर्वंपरिच्छिन्नम् । अथवर्गोत्तमस्वांशत्र्यंशगतेग्रहेगुणोहिमि-
तोवेदोइतोजातोभगुणकोद्वेमितः१ यदितत्तद्ग्रहेगुणेतत्तद्धोरादि
गुणकोलभ्यतेतदास्मिन्नद्वेमितेव २र्गोत्तमादिगुणेकिमितित्रैरा-
शिकेनगुणान्तराणिसाध्यन्ते त ।वन्तएवगुणाःषड्विंशत्तुल्यहराउ-
त्पद्यन्ते । ग्रहस्थानेपिपूर्वप्रकारेणयोगुणकस्तद्धरस्था।नेया।वत्षड्विं
शत्स्थाप्यन्तेतावद्वर्गोत्तमान्यतरवशात्प्राप्तगुणकानन्तरताकघा-
ततुल्यएवगुणकउत्पद्यते । अतस्तत्राङ्कयोगंषड्विंशतैवभजेन्नतु-
प्रोक्तहरेणेत्यपिसाधु अथवर्गोत्तमादिविकान्यतमस्थेग्रहोयद्यधि-
शत्रुगेहेभवतितदाग्रहगुणकस्यास्य ९ लयोनगांशाद्यधिशत्रुरा-

शावित्युक्तेरयंगुणः । तत्रगुणानंख ३६ खण्डाभ्यामपिभव ३ । तीत्येतस्यखण्डद्वयंकृतंतत्रैकम् ७ । अपरंच ४ । तत्र ७ प्रथमखण्डेनगुणहरयोस्तुल्यत्वान्ना ७ शेकृतेपू ७ र्वानीतआश्रयगुणकालब्धः । द्वितीयखण्डेनतुराशिगुणेआहतिस्छेदवधेनभक्तेतिभिन्नगुणनरीत्यागुणितेचतुर्भिरपवर्तितेचग्रहाङ्कस्यैवाधनखण्डगुणितत्वाद्दणगतस्यत्रिषष्टितमोभागोभवतीतिग्रहाङ्कत्रिषष्टिभागोनः पूर्वानीताश्रयगुणकोवास्तवआश्रयगुणोभवतीत्युपपन्नम् । एवमधिमित्रग्रहेगुणः । ११ । अस्यापिखण्डद्वयंविधायगुणनेग्रहाङ्कत्रिषष्ट्यंशएवभ । ७ । तीतितथोक्तम् । परमियांस्तुविशेषः । अत्रसप्तचतुर्मितएकादशानांधनखण्डकृतेत्रिषष्टिभागोयोज्यइति । अथशत्रुग्रहेगुणः १३ अयमाद्यः कल्प्य २१ तः । अनेनतुरानीताश्रयगुणेनगुण २१ नेगुणकभाजकयोः २१ समत्वादपगमेकृतेसएवजातः । गुणकांशस्थानेष्टावधिकाग्रहीताद्धत्यष्टानामेकविंशत्यंशेनगुणितराशिगुण १० लब्धंपुरानीताश्रयगुणाच्छोध्यंतत्रषट्त्रिंशदेकविंशतितुल्य ३६ हरयोर्घातस्यास्य ७५६ मातङ्गै ८ रपवर्तेकृतेलब्धासार्द्धाचतुर्नवतिः ९४। ३० स्वल्पान्तरत्वाच्चतुर्नवतिमेवगृहीत्वाग्रहाङ्कचतुर्नवतिभागोनः पूर्वानीताश्रयगुणकः कार्यइत्युपपन्नम् । अथवर्गोत्तमादित्रिकान्यतरस्थोग्रहोयदिमित्रगृहेभवतितदायंगुणकः अ २९ । स्यापिधनखण्डकृत्वाग्रहाङ्कचतुर्नवतिभागान्वितः पूर्वा २१ श्रयगुणोवास्तवोभवतीतिनिष्पन्नम् । वासनात्राद्यास्त्वधिरिपुगृहसुत्रिषड्लब्ध्योनोमित्रारिभेतुचतुर्नवत्यंशयुतोग्रहाङ्कः कार्यइतिवदन्तितदतीपतुच्छमित्यवगच्छ । समग्रहेतुरूपमुदासराशावित्युक्तत्वादपिगणगुणनेविकृतत्वाद्यथास्थितएवगुणकः । स्वराशिस्थेवर्गोत्तमादित्रिकान्यतमस्थेचग्रहेराशिसंभाद्वर्गोत्तमाद-

वशादपिद्विमितगुणकप्राप्तौसकृद्गुणभितिवाक्यैनैकस्यैवगुणक स्यानियमनादपरद्विगुणासर्वथावाधएवातः सम्यग्गुत्तंस्विसमेकेवल द्रुतिद्वुल्याश्रयगुणकोपपत्तिः। कर्मयोग्यगुणकमाह॥

तत्स्फुटद्दृतेमूलंसयोग्योगुणः॥

स्पष्टम्। उपपत्तिः प्रागुक्तैव। अंशायुर्दायोपयोगिहायना-णानाह॥

खेटानांचतनोर्लवाःस्वयुगहृच्छेषाद्रू
हांशायुषः॥ १८॥

ग्रहाणांलग्नस्यचलवास्त्वारिंशद्भक्तशेषाःसन्तोंशायुषोऽब्दा भवति। अत्रोपपत्तिः। ग्रहभुक्तनवांशराशितुल्यंवहुसाम्यंसमु-पैतिसत्यवाक्यमित्युक्तेर्मेषनवमांशस्थे ग्रहेएकवर्षमायुर्वृषांशस्थे द्वे वर्षेएवंक्रमेणमीनांशेद्वादशवर्षाणीतिनिर्णीतम्। तत्रमेषादे-श्चत्वारिंशदंशान्तेमीनांशान्तोभवतीतिचत्वारिंशदंशैरेकः परि-वर्तोनव्यतेतदंशेर्ग्रहलग्नांशैः कतीतिचत्वारिंशद्भक्ताग्रहलग्नां-शागतपरिवर्ताः स्युः शेषोवर्तमानपरिवर्तस्यगतंभवति। कला-नांद्विशत्यै २०० कोनवांशस्तत्तुल्यान्येववर्षाणीतिद्विशतकला-भिरेकंवर्षंतदादायाशापरपर्यायशेषांशकलाभिः। किमिति। वर्षाद्यमंशायुर्भवति। अतएवनच्यते। दायाशोत्थकलाः खयो-ग्यगुणकघ्नाः खाभ्रनेत्रोद्धृतादृति। अतः सर्वंसयुक्तिकमेव। अ-थचक्रार्द्धहानिमाह॥

षड्भाढ्येसतिखेचरेनउदयेस्यांशोद्धृतैः
खाग्निभिस्त्वेकाढ्येस्यचखाग्निभाजि

तत्त्वैः सौम्योनितेत्वद्धिते तैः उनाभूर्गुणा एकभेद्विबहुषुत्वेकस्य बह्वोजसः कार्या स्तद्गुणिताः खदाय जलसाम्यचक्रार्द्धहानिरित्वयम् ॥ १६ ॥

खेचरोनउदयेषड्भाल्ये मति अस्यांशोद्धृतैः खाग्निभिरूनाभूर्गुणाः स्यादित्यन्वयः अयमर्थः । ग्रहोलग्नाच्छोध्यः शेषं यदि षड्भाधिकं तदानैवाहानिः यदि च षड्भाद्यल्पं तर्हि अस्य षड्भाल्पस्य खेचरोदयस्य राशयस्त्रिंशत । गुण्यया अधः स्यांशयुक्ता अंशाभवेयुस्तै स्त्रिंशद्भाज्या लब्धेन भूरेकः हीनः कार्योगुणकः स्यात् । तुर्विशेषे एतल्ये खेचरोनोदये अस्य खेचरोनोदयस्य खाग्निभिस्त्रिंशताभाजितत्त्वैनाभूर्गुणः स्यात् । तुर्विशेषे । सौम्योनितेउदये शुभग्रहोनेलग्ने कृतेसति अद्धितैः खाग्निभाजितत्त्वैर्वा उनाभूर्गुणः स्यात् । तुविशेषे । एकभेद्विबहुषु द्वित्र्यादिषु ग्रहेषु सत्सु बह्वोजसः एकस्य वगुणः कार्यः बहु ओजोवीर्यं यस्य इति बह्वोजास्तस्य । एक राशिस्थानां मध्ये योरूपषड्बल्याधिकवलीतस्यै वगुणः कार्यइत्यर्थः । यदातु रूपषष्ठ्यंशादिबलसाम्यं स्या त्तदासर्वेषामपिगुणः कार्यंइतिमिश्राः प्राहुः । वस्तुतस्तु नैसर्गिकबलमेतद्बलसाम्ये स्याधिकं चेलितिलघुजातकभारावल्या युक्तेरेकस्त्वे कर्त्तगैर्व्यक्रूतिगर्गीतेष्वयस्य निसर्गबलमधिकं तस्यै वगुणः सोध्यइतिषचवि षष्ठ्यंशस्याति सूक्ष्मत्वाद्रूपषष्ठ्यंशपर्यन्तं चक्रार्द्धहानिर्भवेत् । गुणकेदायांशगुणने परिणामेहानिरेवभवतीति भावः । चक्रार्द्धहानिनामचक्रपातार्द्धहानिः पातोविपरीतस्तद्विपरीतत्वसंबन्धेनपातशब्दस्य विपरीताभिधेयेलक्षणाचक्रस्यार्द्धपरीतार्द्धं तत्संब--

व्ययेनोहानिरित्यर्थ इति सिद्धाः । अत्रोपपत्तिः बृहज्जातके । स-
र्वार्धत्रिचरणपञ्चषष्ठभागाः क्षीयन्ते व्ययभवनादसत्सु वामम् सत्स्व
र्धं ह्रसति यथैकराशिगानामेकोंऽशं हरति बली तथाहसत्यः । लग्ना-
द्द्वादशराशौ पापग्रहे संपूर्णायुर्हानिरेकादशेऽर्धायुर्हानिर्दशमे तृती-
यांशस्य नवमे चतुर्थांशस्याष्टमे पञ्चमांशस्य सप्तमे राशौ आयुषः षष्ठां
शस्य हानिः । शुभग्रहे तु तन्मध्याद् द्वादशराशौ स्थितेऽर्धहानिरेकाद-
शे चरणस्य दशमे षष्ठांशस्येत्यादि । द्वादशमे सर्वत्वसंपूर्णा हानिर्नयु-
क्ता कश्चिदेकत्वयुक्ता तस्माद्यावति मेषादिभागे लग्नं लग्नाद्द्वादशे--
पि तावत्येव मेषादिभागे स्थिते ग्रहे उत्सर्गसिद्धयुक्त्यात्मकसाम्यात्
द्वादशस्थमेषादिसंज्ञव्यावहारिकराशिखण्डं भावाद्वीत्ववदेक द--
शराश्यन्तरे लग्नादर्वाचीनैकराश्यन्तरात्मके सर्वो भागो हीयते । स-
र्वेषु जातकतन्त्रेषु भागपर्यायपदपर्यन्तभावनात् सर्वोऽपि भाग एक-
रूपहरेणायातीत्येकरूपं हरः । एवं दशराश्यन्तरे लग्नादर्वाचीन-
द्विराश्यन्तरात्मकेऽर्धो भागः क्षीयतेऽर्धभागोऽपि द्विरूपहरेणागच्छ-
तीति रूपद्वयं हरः । एवं क्रमिकनवभान्तरेऽर्वाचीनत्रिभान्तरे त्रिरूपं
हरः । अष्टभान्तरेऽर्वाचीनचतुर्भान्तरे चतूरूपं हरः । सप्तभान्तरेऽर्वा-
चीनपञ्चभान्तरे पञ्चकं हरः । लग्नात्षष्ठान्तरे षड्रूपं परमो हरः । अ-
र्वागन्तराभावे ह्रासाभावः । तस्माल्लग्नावाङ्नीचैकराश्युपचयादे-
कहरोपचय इति सिद्धम् । अथानुपातः । यदि त्रिंशदंशैरेकरू-
पं १ हरस्तदेष्टखेचरोनोदयराश्यंशतुल्यलग्नावाचीनराश्यंशैः कि-
मिति खेचरोनोदयांशं त्रिंशदंशोहरः इति निष्पन्नम् अनेन सच्छेदेन
हरेणायुर्लब्धं भाज्यं लब्धमायुर्लब्धेभ्यः शोध्यमिति तच्छेदं तद्वच्च परिव-
र्त्यं हरस्य शेषः कार्योंऽशभागहरणे गुणनाविधिरिति सूत्रे हरभक्ता-
आयुर्लब्धा जातम् । हा-ल ३० अतायुर्लब्धास्त्रिंशता गुणनीयाः
खेचरोनोदयांशैर्भाज्या अथवा खेचरोनोदयांशभक्ता त्रिंशता गुणनी

याइतिनिष्पन्नन्तत्रखेचरोनोदयांशभक्तत्रिंशद्गुणा आयुर्लवावे-
भ्यः शोध्याः खेचरोनोदयांशभक्तत्रिंशदूनरूपगणायुर्लवा वा फलं-
सममेव । तद्यथा । आयुर्लवाः १० खेचरोनोदयांशाः ६० खे-
चरोनोदयांशा ६० भक्तत्रिंशता ३० आयुर्लवा गुणितालब्धमा-
युर्लवेभ्यः शोधितं जातम् ५ । यद्वा खेचरोनोदयांशभक्तत्रिंशदून-
रूपगणानेनः । २० । आयुर्लवा गुणिताः फलं सममेव जातम् ।५ ।
अतः षड्भाल्पे सति खेचरोन उदये स्यांशोदनैः खाग्निभिरूनाभूर्गु-
णः स्यादिति युक्तमुक्तम् । एकाल्पे तु खेचरोनोदये त्रिंशद्गुणायुर्लवे
भ्यस्त्रिंशदल्पखेचरोनोयांशैर्भागे ह्रियमाणे फलमायुर्लवाधिकमा-
युर्लवेभ्यनशुद्ध्यतीति व्यस्तत्रैराशिकं कर्तुमुचितमतः खाग्निभाजि
तलवै रूनाभूर्गुण इत्यपि सुष्ठूक्तम् । अतस्वर्हक्षसतीत्युक्तः सौम्ये-
नितेलग्नेऽधिके खेचरोनोदयांशभक्तत्रिंशद्भिः खाग्निभाजित-
लवैर्वीनाभूर्गुणः स्यादित्यपि नितान्तं कान्तम् । अनेन गुणेनायुर्वं-
शा गुणनीया अतस्तद्गुणिताः खदायजलवा इत्युपपन्नम् । यच्चके-
चिन्नाववशाच्चक्रार्द्धहानिं कथयन्ति तस्मात्तमसाचार्येणनस्वीकृतम्
गर्गमयाच यैवनेह कल्याणवर्मादिभी राशिपर्यायपर्यन्तंधाव-
नात् । अतो यदुक्तं तत्सर्वं निरवद्यम् । पद्धतिप्रकाशे तु चक्रार्द्ध-
हानिगुणः प्रकारान्तरेणसयोक्तः । एकाल्पके भद्विगुणांशतुल्यं-
रसाल्पकेतद्वतरूपतुल्यम् । शोध्यं तदूनेकामितो गुणः स्यात्कु-
भोनितेंशोध्यदलेन युक्ता । १ । खगोनलग्न इत्यनुषङ्गः । शेषं स्फु-
टम् । आचार्योक्तप्रकारे त्रिंशताऽपवर्तं कृत्वाऽस्योपपत्तिस्त्वेकै-
रूह्या । विस्तारभयादस्माकमनुद्योगः । सोपपत्तिपद्धतौ शुभग-
हस्य रूपाल्पहरे सति स्वहिंस्सतीत्यहज्जातकोक्तहरार्द्धं रूपाच्छोध्य-
म् । यया शिरहरोनरूपं हरार्द्धं युक्तं वा गुणो भवतीति द्रष्टव्यम् ।
अपशब्दाश्चमोदरः । रूपाल्पकोद्वितो हारस्तदा रूपाद्विशोधयं-

दिति । हरखण्डेनसंयुक्तोगुणकः सगुणोऽथवेतिच । आदिशर्म-
णात्वज्ञातहानिकर्मणालग्नशुभानितद्धारगुणौद्विनिघ्नावितिव-
दताहरोन रूपं द्विगुणंगुणोभवतीतिस्वीकृतंतदसत् । लग्नरा-
श्यादिसमेपापेसंस्थेत्रान्तराभावाद्धान्यभावइतिहालिकोपिप्र-
तिपद्यते । तत्रपापस्यहरः शून्यमितिरूपंगुणस्तेनदायांशाएव-
भवन्तीतिनकापिहानिः। शुभस्यहरोद्विनिघ्नइतिरूपद्विगुणस्ते-
नदायांशगुणनेद्विगुणायंभवतीतियत्किंचिदेतत् । हानिगुणकेन-
गुणनेहानिरेवभवितुमर्हतिनवृद्धिरितिबालोपिजानाति । एव-
मन्यत्रापिव्यभिचरतीतिपरिहार्योयंपन्थाः । यदप्यायुष्मताख-
गोनलग्नचक्राल्पंकुहृतंहरोभवतीतिउक्तं तदप्यसत् । तत्रराश-
योर्योहिघ्नलवाढ्यानायुक्ताहरोभवतीतिध्येयम् । यदपिगणेशना-
म्नाहिघ्नहरोनंरूपगुणः स्यादित्यभिहितंतदपितुच्छम् । कदाचि-
द्धिघ्नहरस्यरूपादप्याधिक्यलाभेनरूपाच्छुद्ध्यसंभवात् । रूपमेव-
तदाच्छोध्यमितियदितथापिव्यभिचरतीतिधूलीकर्मणाप्रदर्श-
नीयम् । यत्तुभाववशाद्दादिशर्मणाचक्रार्द्धहानिः स्वीकृतातद-
सदितिप्राचोक्तं तदप्यसङ्गतम् । ग्रन्थेतेनतथानङ्गीकारात् ।
सूर्येणक्षीणचन्द्रोविपापाद्युक्तं तदपिपद्धतिकारविरोधादयुक्तम् ।
प्रकृतमनुसरामः अथायुर्दायसाधनमाह ॥

दायांशोत्थकलाःस्वयोग्यगुणकघ्नाःखा
भ्रनेत्रोद्धृताश्चांशायुर्द्युसदांसमादितु
तनोर्दायांशकास्त्वाहृतः ॥ द्विभक्ता
स्त्वसमादिचेत्तु बलवल्लग्नन्तदाग्नभेस्तु
ल्याब्दैरसहितंद्विनिघ्नशरहृद्भागादि

## तोमासयुक् ॥ २० ॥

यथाप्रपञ्चक्रार्द्ध हानिसंस्कृतदायांशानां कलाः स्वकीयकर्मसंयोग्यगुणकेन गुणिताद्विशत्याभक्ताः फलसंज्ञायुर्वर्षाद्यं भवति । अयमभिसन्धिः । दायांशकलाद्विशत्याभक्ताल्लब्धवर्षाणि स्युः । शेषं सविकलं द्वादशभिः संगुण्य विकलास्थानात् षष्ट्याप्तं कलासु संयोज्य द्विशत्याभक्तं मासाः । पुनः शेषं सावयवं त्रिंशता गुणयित्वा विकलातः षष्टिलब्धमुपरि प्रक्षिप्य शतद्वयेन भागे गृहीते दिनानि स्युः पुनः शेषं षष्ट्या निहत्याधः स्थाङ्कयुतं द्विशत्याभजेल्लब्धं घटिका भवेयुरेवमग्रेऽपि । लग्नस्य दायांशास्त्रिगुणाः प्रोक्तारीत्या दशभिर्भाज्यवर्षाद्यं लग्नायुर्भवेत् । यदि तु षड्रूपाधिकबलं लग्नं तदा लग्नराशितुल्यवर्षैर्युक्तं कार्यम् । लग्नभागादेर्द्विगुणात्पञ्चभिराप्ते नमासादि च युक्तं कार्यं तल्लग्नायुस्पष्टं भवति । यदा लग्नबलं षड्रूपाल्पं तदानीं दायांशास्त्रिगुणा दशभक्ता एव लग्नायुः स्यादिति तात्पर्यार्थः । बलवत्त्वलग्नाल्पत्वे हीहबलोबलोषडधिकइत्यग्रे वक्ष्यते । महायुः साधनवासनायद्येकनवांशकलाभिर्द्विशतमिताभि २०० रेकं वर्षं तदेष्टदायांशकलाभिः किमित्यनुपातेन सुगमा । दशभिरंशैस्त्रयो नवांशास्तत्तुल्यान्येव वर्षाणीति त्रीणि वर्षाणि भवन्ति । अथानुपातः । यदि दशभिरंशैस्त्रीणि वर्षाणि तदेष्टलग्नदायांशैः कानीत्यत उक्तं तनोर्दायांशकास्त्र्याहताद्विभक्ताद् तिवीर्यान्विताराशिसमं च होरेति बृहज्जातकोक्तं लग्नभैस्तुल्याब्दैः सहितमित्युपपन्नम् । यतोऽनुपातः । यदि त्रिंशदंशैर्द्वादशमासास्तदेष्टलग्नभागैः किमिति । अत्र गुणहरौ षड्भिरपवर्त्य लब्धं गुणो द्वौ २ हरे पञ्च ५ अतो द्विनिघ्नशराहृतेत्याद्युपपन्नम् । अथपिण्डानसर्गजीवशर्मायुर्दायोपयोगिभूतानृ दायांशान्साधयति ॥

स्वोच्चानीचोच्चरोङ्कभात्समधिको ग्राह्यो
ल्पकोनार्कभं १२ तद्भागाद्युचरोरिभेय
द्विगुणांशोनाविनाक्रगम्। ह्रासार्धास्तमि
तेविनाशनिसितौ हानिर्व्ययेचाधिकै
काद्योपिगृहनिसर्गजोवगदितेचक्राद्
र्धहानिर्भवेत् ॥ २१ ॥

स्वोच्चेनोच्चग्रहो यदि षड्राशिभ्योऽधिकस्तदा स्वभागाः। कार्यः। यदि षड्भाल्पस्तदा तं द्वादशभ्यो विशोध्य भागाः कार्याः। वक्रगं नीचासन्नभावेन वक्रगतिं प्राप्तं ग्रहं भौमादिपञ्चकान्यतमं विहाय यद्यरिभे स्वाभाविकशत्रुराशौ ग्रहः स्यात्तर्हि तत्तदीया भागा निजचतुर्थांशेन हीनाः कार्याः वक्री ग्रहः शत्रुराशावपि त्र्यंशं नापहरतीत्यर्थः। अत्र केचित्तु स्पष्टाकारादारो वक्रः क्रूरत्वावनेयद्वल्यभिधानाद्धित्वा वक्रं रिपुगृहगतैर्हीयते स्वत्रिभाग इति वराहोक्तौ वक्रशब्देन भौमं व्याख्याय तत्स्वरसाद्वक्रगमित्यत्रापि भौमं व्याचक्षते तद्वृद्धानामसंमतत्वादुपेक्ष्यम्। ज्ञानराजसुतसूर्योऽपि। आरोऽवक्रो वक्रचारी महीज इति भौमनाम। निर्विच्छयाप्रकवलम्यवक्रचारग एति। अपरत्र तौ वक्रचारगो भौम इति व्याख्यातवान्। तदपि स्वच्छन्दं प्रवर्तमानस्यैकदेशिनो मतमुपेक्ष्यमेव। बृहज्जातकटीकायां हित्वा वक्रमित्यस्य व्याख्यावसरे भट्टोत्पलेनाप्युक्तम्। वक्रं विपरीतगतिं हित्वा वर्जयित्वा यो ग्रहो रिपुगृहगतः शत्रुक्षेत्रगतो भवति तेन स्वादायुषस्त्रिभागो हीयते। एतद्वृद्धानां मतम्। आचार्यस्य पुनरेष एव पक्षोऽभिमतः। अन्यथा हित्वा भौममित्याचक्षीत

चतद्रूवत्तायते। यथावक्रगोग्रहश्चायुर्दायंसवलत्वाज्ञिर्गुणंदद्या-
तितथाचापिनापहरतीतिनिश्चयइतिकथंपुनर्वक्रिणांविहायेति-
पत्तस्यबहुसंमतत्वमितिचेत्। पश्य। श्रीधरः। वक्रचारंविना-
त्यंशंभात्तुराशोहरेद्ग्रहइति। श्रीपतिरपि। व्यंशकंहरतिभात्तु-
भेग्रहः स्वयुषोचनतुवक्रचारगः। दामोदरोपि। विनावक्रग-
तिंहरेच्च। निजायुषस्त्र्यंशमरेगृहइति। होरामकरन्दे।
त्र्यंशंहरन्त्यकुटिलारिपुराशिसंस्थाइति। बृहज्जातकेपि। हि-
त्वावक्रमित्यत्रवक्रमस्यास्तीतिवक्रः अर्थसादिभ्योऽच्वक्रिणांहित्वे
तिव्याख्येयम्। प्रामाणिकैः श्रीधराचार्यैर्गर्गपराशरबादराय-
णदेवलादिपद्धतयस्तज्जातकानिचसंपूर्णानिदृष्टान्यासन्नतस्तैर्य-
दुक्तंतत्सर्वंसमूलमेव। यत्तुबृहज्जातकटीकायांनचावनिसुतस्त्र्यं-
शंगत्वेत्वगतस्तथेतिगर्गवाक्यंयदपिचभूम्याः पुत्रंवर्जयित्वा-
रिभस्थाहन्युः स्वात्स्वादायुषस्तेत्रिभागमितिबादरायणवाक्यंत-
दुभयमप्यंशायुः प्रकरणेऽभिहितत्वादंशायुर्विषयमेवेतिबोध्य--
म्। पराशरेणगत्वेत्वेचततस्त्र्यंशमितिवदताभौमंत्रिहायति-
नोपात्तम्। तथालघुजातकमाराबल्यादावपिनोक्तमेवंमतभेदे-
पराशरमतमेवबहुसंमतत्वाद्दंशायुष्याद्दतमाचार्यैरित्यपिध्येय--
म्इतिप्राप्तेग्रहेतेदायांशाद्विभक्ताः कार्याः। शनिशुक्राबस्तंगता-
वप्यर्द्धंनापहरतः। अत्र्यंशार्द्धहानिद्वयेप्राप्तेऽधिकार्द्धहानिरे-
वकार्यानहानिद्वयम्। अनेनहानिद्वयेपिद्वितयंविधेयमित्यधुना
तनोक्तंपरास्तम्। गर्गः। ध्रुवायहानिः कर्तव्याततोन्यासुबहु-
ष्वपि। प्राप्ताखिकैवकर्तव्यायास्यात्तासुमहत्तरा। यवनः। खे-
चरोजायतेयोर्द्धत्र्यंशयोरपहारकः। आयुषःसहरेदर्द्धंत्र्यंशंशुक्र-
शनैश्चरौ। ननुत्रुवायहानिः कर्तव्येत्यादिगर्गवाक्यस्यांशायुः प्र
करणपठितत्वादनेनांशायुष्येवसकृद्धानिरुक्तानपिण्डायुषि--

किंचानिष्कृष्टार्थं प्रतिपादकैर्वराहश्रीधरश्रीपत्यादिभिराचार्यैः पिण्डाद्यायुर्दायेषुसकृद्धानिर्नाभिहिता तस्माद्वितोर्हानिर्द्वयेप्राप्तेऽधिकैकाद्धानिः स्यादितितदुक्तं यदयुक्तम्। नचाचार्यकरवंतुबहुत्वतायामेकंतुयद्भूरितदेवकार्यमित्यस्यव्याख्या वसरेशत्रुक्षेत्रस्थोनीचस्थश्चयदाग्रहोभवत्यस्तंगतोवातदासकृदेवायहानिः कार्यानीचेतोर्द्धकृसतीत्यत्रप्यनुवर्तनीयम्। इतिभट्टोत्पलोक्तेः सकृद्गुणननियमनौपम्येनसकृद्धानिरपिस्वीक्रियतामितिवाच्यम्। तथासतिनीचस्थेग्रहेशत्रुक्षेत्रगतेस्तमितेवासकृदर्द्धहानिरेवस्यान्नत्र्यंशहानिर्नापिद्वितीयार्द्धहानिरितिप्रसज्येत। तत्रयथाभवद्भिर्दायांशयाधनेनैवनीचस्थत्वनिबन्धनामर्द्धहानिंविधायपश्चाच्छत्रुराशिस्थेत्र्यंशहानिरस्तङ्गतेऽर्द्धहानिर्वाक्रियतेतद्वदिहापित्र्यंशार्द्धहानिद्वितयेप्राप्ते विनिगमनाविरहाद्धानिद्वितयमपिस्यादितिसुन्दरोक्तएपपन्यानितान्तसुन्दरतिप्रतिभाति। अतवयंतुब्रूमः। खेचरोजायतइत्यादियवनमुनिवाक्येनिशिष्यत्र्यंशहान्यस्तंगतत्वनिबन्धनार्द्धहान्योर्निर्णयस्योक्तत्वात्तद्धानिद्वयेप्राप्तेऽधिकार्द्धहानिरेवस्यान्नहानिद्वयम्। नीचस्थत्वनिबन्धनार्द्धहानौप्राप्तायां तथारिभस्थितत्ववशात्सूर्यक्लिप्त किरणत्वाद्वापरहानौचप्राप्तायां सकृद्धानिनिश्चायकवचनाभावाद्धानिद्वयेनकिंचिद्बाधकम्। अतोहानिद्वयेऽप्यधिकैकेतिसर्वमवदातम्। खेचरोजायतइत्यपिवचनमंशायुर्विषयकमितिप्राञ्चः। तन्नचतुरस्रंप्रमाणाभावात्। केशवतः परमप्राचीनेनभट्टोत्पलेनेनदंयवनवचनंदृष्टमतः केशवदृष्टमिदंवचनंशककालप्राचीनयवनस्यनभवतीत्यप्याहुः। तदयुक्तम्। भट्टोत्पलेनपराशरजातकंनदृष्टमस्माभिस्तुकिंचित्पराशरजातकंदृश्यतेतत्रभट्टोत्पलादृष्टत्वादिदंपराशरीयजातकमेवनभवतीतिवक्तुमशक्यम्। तस्मात्प्रामाणि-

कैः श्रीकेशवसांवत्सरैरिष्टं यवनवचनं भवत्येव । अथविति । अथो इत्यानन्तर्ये । मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथेत्यमरः । चक्रार्द्धहानिर्भवेत् । पूर्वानीतस्वकीयचक्रार्द्धहानिगुणेन दायांशा गुणनीया इत्यर्थः । अथादित उपपत्तिः । बृहज्जातके । मययवनमणित्थशक्तिपूर्वैर्दिवसकरादिषु वत्सराः प्रदिष्टाः । नवतिथिविषयाश्विभूतरुद्रादशसहिता दशभिः स्वतुङ्गभेषु । १ । नीचेतोऽर्द्धं ह्रसति हि ततश्चान्तरस्थेऽनुपातादिति उच्चे पठितमायुर्नीचपठितार्द्धमायुस्तस्मान्नीचादग्रतोवागपिषड्राशिभिः पठितवर्षार्द्धस्योपचयो भवतो हि नीचादग्रिमा अर्वाचीनाश्च राशयः पठितवर्षार्द्धगुणाः षड्भक्ता अथवा पठितवर्षगुणा द्वादशभक्ताः फलं पठितवर्षार्द्धे योज्यं पिण्डायुः स्यात् । तत्र स्वोच्चोनेषड्भाधिके षड्भं संशोध्य शेषं नीचादग्रिमराश्यादि तत्पठितवर्षगुणं द्वादशभक्तं फलं पठितवर्षगुणात षड्भस्य द्वादशभागात्मके पठितवर्षार्द्धे योज्यमिति नीचादग्रिमराश्यादेः प्रागेव षड्राशियोगाद्यथास्थितं स्वोच्चोनमुच्चं षड्भाधिकं च हीत्वायुः साधनेन कोऽपि विशेष इति बालोऽपि जानाति । अतः स्वोच्चोनो युक्षड्भात्समधिको ग्राह्य इत्युपपन्नम् । षड्भाल्पे तु स्वोच्चोनितं षड्भाद्विशोध्य शेषं नीचादर्वाचीनराश्यादि प्राग्वदिहापि प्रागेव षड्भयोगात् षड्भाल्पं द्वादशराशिभ्यो विशोध्य ग्राह्यमिति युक्तम् । अस्य स्वोच्चोनषड्भाधिकस्य राश्यादि पठितवर्षगुणं द्वादशभक्तं कार्यं तत्राचार्यैर्यांशा एव कृता अतस्तद्भागाः पठितवर्षगुणा भगणांशैर्भाज्या इत्युपपन्नम् । अत एव वक्ष्यते । दायांशाः स्वगुणैर्हता हि भगणांशा ३६० प्ताः समादिपिण्डायुरिति । त्र्यंशार्द्धहानिर्वासनाहोरागममूलैव । अंशायुषि वक्रगतिग्रहस्य सबलत्वेनायुषस्त्रिगुणितत्वादिहापि सबलत्वात् त्र्यंशहानिरुचिता । अतो विनावक्रगमिति साधु । सूर्येणास्तं गतयोरपि शनिशुक्रयोर्वै

राभिनिवेशेन नैवायुर्हानिरित्यपि सुष्ठूक्तम् । पूर्वोक्तं चिन्तयेत्सर्वं-
मिति सारावल्यामुक्तत्वाच्चक्रार्द्धहानिः कार्येत्यपि सुष्ठूक्तम् । अ-
त्रारिभञ्जलिसामान्यतो निर्देशात्स्वाभाविकशत्रुरेव ग्राह्यो नता-
त्कालिकशत्रुः । यतस्तया सति कदाचिदधिशत्रुरपि संभवति ।
तद्ग्राह्यावपि प्राग्वद्धानिविशेषो विभाव्यं । हानिस्तु नाभिहितातोय-
द्व्याख्यातं स्वाभाविकशत्रुभ इति तत्सर्वं समीचीनमेव, न चाधिश-
त्रुरपि शत्रुभं स्यादेवेति तद्वेपित्वं शत्रुहानिरिति वाच्यम् । अप्रायो-
जकत्वाद्बहूनामसंमतत्वाच्च । अथ लग्ने क्रूरे हानिमाह ॥

दायांशाद्युसदां पृथक्तनुलवाद्विघ्ना
खषट्चाहता भागोनास्तनुगे खले च
यदि सद्दृष्टेऽर्द्धयाथापरे । निघ्नोघ्नोद्वय
भावजेन तनुगो ग्रौ चेद्बलिष्ठस्य तत्साम्ये
पुष्टफलेन नैति तनुपेस्मिन्भोगजे सौक्रि
या ॥ २२ ॥

द्युसदां ग्रहाणां दायांशा अनन्तरानीता यथाप्राप्तचक्रार्द्धहानि
गुणितास्ते पृथक्स्थाप्याः । तनोर्लग्नस्य राशीन् परहायांशादिना गु-
ण्याः षष्ट्यभिकशतत्रयेण भाज्याः आप्त्या लब्धेनांशादिना पृथ-
क्स्थाहीनाः कार्याः । तनुगे लग्नस्थे खले क्रूरग्रहे सति । अत्र क्रूराः
सूर्यभौमशनय एव । यत आह बादरायणः । सूर्याङ्गारशनीनामे
कस्मिंल्लग्ने भवति हानिः । विधिनानेन सौम्यैश्चितेदलं पातये-
ल्लब्धात् । लब्धाद्दलं लब्धस्यार्द्धं पातयेदित्यर्थः । आयुः पिण्डादि-
ति शेषः । यदा शुभः क्रूरश्च द्वावेतौ लग्ने भवतस्तदापि क्रूराक्रान्तत्व

निबन्धनाद्धानिः स्यादेव । यदाह पराशरः तिष्ठतः शुभपापौ-
चेत्पापोदयविधिः स्मृतइति । एतदर्थलाभार्थमेवचशब्दोपादा
नमवेतिबोध्यम् । यद्विलग्नस्थखलः सताशुभग्रहैर्यादृष्टस्तर्हिच-
र्ड्यायाप्त्याउनाः कार्याः अत्रशुभाश्चन्द्रबुधगुरुशुक्राः । यथा-
परइति । अथशब्दोमतान्तरसूचनार्थः । ग्रहाणाद्वांशाउदयोद-
यभावजैननिम्नग्रायाप्ताजनाः कार्याः । उदयोलग्नं तदुदयका-
वान्तनुभावाज्ज्ञायतेतदुदयभावजमर्थात्फलमुग्रस्योदयभावजं-
तेनलग्नवर्तिक्रूरस्यलयोत्पन्नारोहावरोनफलिनाप्तिर्गुणनीयेत्यर्थः।
सौम्यदृष्टे तुलग्नगेक्रूरेउग्रोदयभावजैनर्द्धिग्राद्धयायाप्ताेनाः का-
र्याः । ननुयद्विद्विचाः पापग्रहालग्नेस्युस्तदाकस्यभावफलेनगुणा-
नीयेत्यतआह । तनुगोग्रोचेद्बलिष्ठस्येति । षष्ठ्यग्रमाचबलिना-
प्यधिकवलशालिनइत्यर्थः तनौलग्ने गच्छतस्तौतथातौचतावुग्रौ-
चतनुगोग्रौ । अत्रद्वित्वंचित्त्वोपलक्षकं । बलसाम्येविनिगम-
काभावाद्दृद्ध्यादिफलप्राप्तंगुणनंनिषेति । तत्साम्येपुष्टफलेनेत्य-
नेन । तत्साम्येपुष्टफलेनाधिकारोहावरोहफलेनबलफलसाम्ये-
तुह्र्यादिफलगुणनमर्थात्सिद्धम् । अपरेह्यालुगिरामक्षृष्णाद्दय-
इतिवदन्तीत्यध्याहारः । एवमेकदेशिमतमनूद्यदूषयति । नेती-
ति । इतिउक्तंयत्परमतंतन्नरमणीयंनेत्यर्थः । लग्नगेक्रूलेलग्नेशे-
दृयंहानिः कार्यानवेत्याकाङ्क्षायामाह । तनुपेस्मिन्निति । अ-
स्मिन्लग्नगेक्रूरेतनुपेलग्नेशेसतिअसौहानिरूपाक्रियाकार्या । अ
न्यंविशेषमाह । नांशजेसौक्रियेति । स्पष्टम् । असौक्रियेतिका-
काक्षिगोलकन्यायेनोभयत्रसंबध्यते । यद्वा । नेतितनुपेस्मिन्नि-
त्यत्रअस्मिन्लग्नगेक्रूरेतनुयेसतिअसौहानिर्नकार्येत्यपरेवदन्ती-
तिव्याख्येयम् । अत्रोपपत्तिः । बृहज्जातके । सार्द्धोदितोदितन-
वांशहतात्समस्तात्भागोष्टयुक्तशतसंख्यउपैतिनाशम् । क्रूरेवि-

लग्नसंहितेविधिनात्वेनेनसौम्यैश्चतेदलमत: प्रलयंप्रयाति । ख-
ण्डशब्द: खण्डवाचकस्ततोर्द्धेनखण्डेनोदितोर्द्धोदितस्तेनसहव-
र्त्तमाना: सार्द्धोदिता: सावयवाइत्यर्थ: । सार्द्धोदिताउदिताश्च-
तेनवांशश्चतैर्हतात् । अचलग्ननवांशेतित्यरक्तोदितनवांशेत्युपा-
दानंलग्नस्यराशौन्विहायशेषभागानांकला: शतद्वयेनभाज्यालब्धं
सावयवनवांशाद्युत्ये तदर्थम् । उत्पलस्तुलग्नंराश्यादिकंलि-
प्तापिण्डीकृत्यतद्द्वयेन भागमपहृत्यावाप्तंभ चक्रस्यतावन्तोनवां-
शाउच्चिता: । यश्चार्द्धोदितभवांश: सतचोदितनवांशसमूहेयो-
ज्य: एवंकृतेसार्द्धोदितोदितनवांशसमूहोभवतीतिव्याचख्यौ ।
तन्नश्रद्धयम् । यस्माद्बादरायण: । लग्नांशलिप्तिकाभिर्हत्वायुर्भं-
जेच्चखलिप्ताभि: । कल्याणशर्मा । लग्नांशलिप्तिकाह्रत्वेत्यादि-
श्रीधर: लिप्तीकृतैर्लग्नभागैर्दायान्हन्यादिति गुणाकरोपि । ल-
ग्नस्थेखलखेचरेतनुलवाव्योमौकसामिति । दामोदर: । क्रूराय-
हानिश्चततोचराशौन्विहायलग्नस्यलवादिकेनेति । आदिशर्मा-
पृथक्स्थंखेटायुस्तनुलवहतमिति । विश्वनाथोपि । तनुगख-
लेखेटदायांशा:पृथक्तान्वंशादिशाद्युत्यादि । अचसर्वचांशपर्यायप-
दर्पयन्तधावनस्यलग्नराशीन्विहायांशायाद्याद्युत्यवैवतात्पर्यम् ।
अन्यथालग्नलिप्तिकाभिर्हत्वेत्याद्युक्तंस्यात् अतएवतेनोक्तमन्यस्वे-
वंभ्याचक्षतइत्यादिनैतदपिसमूलमित्यन्तेन । सत्तु । कुम्भलग्न-
स्याद्यांशकउदयेआदित्यचन्द्रशुक्रा: परमोच्चेबुधजीवशनैश्चरा:
परमनीचेभौमस्वकुम्भेष्टा विंशतिभाग इत्यस्मिन्नुदाहरणेलग्न-
स्यभुक्तनवांशशून्यत्वे नपाप ग्रहभौमसंबन्धनिबन्धनहान्यभावे-
पियहच्छयाहानिग्रहायुर्दायेपुक्तत्वासार्द्धपञ्चदशवर्षतुल्यमष्टान्य
ऊर्ध्वंविंशतेरधस्तादायुरानीयचविंशतेरधस्तादायुर्नस्यादितिव-
राहोक्तमयुक्तमित्युक्तंतद्युक्तमितिबोध्यम् । चक्रस्योदितनवांश-

ग्राह्याइत्यस्मिन्पक्षे पिग्नस्यदशराश्यायइतिनवतिनवांशाभुक्तास्त-
स्मादेकावनतिनवांशाभुक्ताइत्युक्तं तदप्यसंगतम् । लग्नगतनव-
मांशस्यभुक्तत्वात् । तस्माल्लग्नायुर्विंशतेः स्यादवस्तादितियुक्तमु-
क्तंवराहमिहिराचार्यैः । यद्वा । विंशतेरधस्तादायुरुदाहरणान्त
रेभवतुनास्माकमत्राग्रहस्तथापिभट्टोत्पलप्रदर्शितविंशत्यल्पायु
र्दायोदाहरणमसदेवेतिब्रूमः । किंच । वक्रितः पुनः शत्रुनीच-
गतोपिनापहरति । एतद्वहूनांमतमितिपूर्वमुक्तंपश्चादङ्गारक-
स्यगचुर्थे चगतस्यापिनपततीत्यभिहितमतः पूर्वापरग्रन्थविरो-
धोपिदूषणम् । यदपिचोक्तम् । परमोच्चगतानांपरमनीचगता-
नांचशत्रुक्षेत्रस्थत्वात्त्र्यंशोस्तंगतानामर्द्धं चनपात्यते । यतोनिमि
षपरमांशकेविलग्नतुल्यवृषस्थस्यचन्द्रस्य शत्रुक्षेत्रस्थत्वेनत्र्यंश-
हानौकृतायांपरमायुर्नप्राप्नोतीति । तदपिमन्दम् । यवनमते-
नशुक्रस्यचन्द्रशत्रुत्वेपिसत्यादिमतेनस्वाभाविकतत्कालमित्रा-
मित्रप्रकाराभ्यांसममित्रत्वोपलम्भेनत्र्यंशहानेरप्राप्तत्वेनतन्निषे-
धस्यान्याय्यत्वात् । किंचतत्कालजशत्रुगेहेत्र्यंशहानिवादिम-
तेशुक्रस्ययवनप्रकारेणचन्द्रस्वाभाविकशत्रुत्वेनतत्कालमित्रत्वे-
नचसमत्वात् । त्र्यंशहानिकथनमयुक्तम् । ननुसत्ययवनमतयो-
र्विरोधेकिंन्याय्यः । उच्यते । वहुसंमतत्वात्सत्याचार्यमतमेव-
प्रमाणमिति । एवमादिभट्टोत्पलेनासङ्गतमुक्तमित्यास्तांतावत् ।
प्रकृतमनुसरामः । लग्नप्रान्तेग्रहायुर्द्वादशांशतुल्यापरमाहा-
निर्लग्नादौतुहान्यभावस्तत्रनवांशानामपिपरमत्वाभावादतोन-
वांशेभ्यः साधनमुचितंहान्याः तत्रनवांशानयनार्थमनुपातः ।
यदिकलानांद्विशत्या २०० एकोनवमांशस्तदेष्टविराशिलग्नकला-
भिः किमिति । अन्योप्यनुपातः । यदिनवभिर्नवमांशैरायुर्द्वा-
दशांशतुल्योपचयस्तदेष्टनवांशैः किमिति । अनन्तरोदितरीत-

लैराशिकेनाद्यनवघातं हरं १०८ कृत्वाष्टयुक्तशतसंख्योभागो नायतइतिसम्यगुक्तमलभवज्जैवं राहमिहिराचार्यैः । एनमपिहरं १०८ हित्वासंगुण्यनिष्पन्नचक्रकलातुल्यहरेणा २१६०० युक्तंलग्नांशकलाहतंभजेदितिवादरायणकल्याणवर्मश्रीपत्यादिभिरपियुक्तम् । श्रीकेशवसांवत्सरैस्तुलग्नस्यकलास्थानेग्राग्रहीतास्तथाचक्रकलास्थानेच क्रांशाश्चहीताश्रतोयदुक्तंतत्सम्यगेव श्रीपत्यादिभिर्दायांशजनितवर्षाद्यायुषएषन्हासोभिहितोस्तुतद्वैतोरितिन्याशेदायांशानामसेवन्हासोविनितइतियुक्तमुत्पश्याम: । अयंन्हासोदायांशेभ्योविधिध्योतश्रापन्नोनादूतिसाधु । दृष्टेर्द्धयेत्यचागमरावप्रमाणम् । अथपरमतवासनोच्यते । उग्रग्रहस्यलग्नभावफलेसंपूर्णे प्रोक्ताहानि तुल्याहानिर्भावफलाभावेहान्यभावः । अन्तरालेत्रैराशिकेनहानिसाधनंन्याय्यंतस्वेदंत्रैराशिकम् । रूपमितेनसंपूर्णेनक्रूरलग्नभावफलेनप्रोक्ताहानिर्लभ्यतेतदेष्टेनकिमित्य,ग्रोदयभावजेननिघ्नरांशा ल्य,पपन्नम् । अतएवोक्तंरत्नावल्याम् । सत्कारएवमुदितोग्रहजीवितांशसंशोधनेपरमभावफलानुसारम् । उक्ताल्पकेमतिचभावफलेनुपाताद्व्याबुधैर्विधिरसाविहयुक्तियुक्तः । १ । नेदंयुक्तंमन्यासहे । गर्गपराशरवादरायणाद्यनुक्तत्वाद्वराहाचार्यानुक्तत्वाच्च । किंचयद्येवंयुक्तिबलात्स्वाक्रियेततदालग्नगक्रूरं प्रतिशुभस्यसंपूर्णदृष्टौभावफलगुणितलब्धेर्दलंशोध्यंन्यू नदृष्टौतद्दृष्टिगुणितंभावफलघ्नलब्धेर्दलंशोध्यंद्वयोः शुभयोर्दृष्टौबलवद्ग्रहदृग्गुणितंतद्दलंशोध्यंवलसाम्येधिकदृष्टिगुणंतद्दलंहेयमित्याद्यतिप्रसङ्गोभूयानापद्येततस्माद्यत्किंचिदिदंशि ॥

अथयोयोभावः स्वामिदृष्टोयुतोवासौस्यैवांस्याचस्यतस्यास्ति वृद्धिरितिस्वामियोगस्यशुभत्वाभिधायकत्वात्सनहानिकारीभव-

तीतिलग्नगेक्रूरेलग्नांशेप्यसौहानिः कार्येतियत्व्याख्यातन्तन्नवि
चारपदवीमारोढुमर्हतीति । अत्राहुः ॥ योयोभावइतिवाक्ये-
भिन्नविषयकेसत्यपियदिहानिर्नस्वीक्रियतेतदासिंहराशिपतावप-
रिरवौसिंहस्थेवराहाद्युक्तन्निशान्धत्वन्दत्तजलाञ्जलिस्यात् । त-
न्नयथासिंहसंस्थेनिशान्धइतिवाक्येन निशान्धत्वदुष्परिहरन्तद्व-
दिहापिलग्नगेक्रूरेलग्नपतावपिवाक्यादियंहानिर्दुष्परिहरैवकिं-
चैवंयुक्तिसंचारेसौम्येचग्रहेलग्नस्थेसाम्याद्वैषाहानिर्नस्यातापिच
लग्नस्थेक्रूरेशुभदृष्टेपापदृष्टेचशुभाशुभत्वसाम्यात्संपूर्णैवहानिःस्या
न्नतदर्धंहानिरित्यादिकोभूयानतिप्रसङ्गः प्रसज्येतेति ॥ वस्तुत-
स्तुलग्नेक्रूरेयदेषालग्नायुष्येवहानिरुक्तास्यात्तदातस्मिंल्लग्ने शेयो
योभावइतिवाक्यत्रलाद्धान्यभावोपिस्यात् । बृहज्जातकेसार्द्धोदि
तोदितनवांशहतेत्यादिवाक्यस्य ग्रहायुर्हानि प्रकरणेपठितत्वा-
त्सारावल्यांविहगायुषीतिव्यक्तमुक्तत्वाच्छ्रीधरेणापिलब्धस्ववर्षादि
कंशोध्यंग्रहाणान्तन्निजायुषीत्युक्तत्वाच्चग्रहायुष्येवायंह्रासोनल-
ग्नायुषीतिलग्नेशेक्रूरेलग्नपतावपिग्रहायुर्हानिकरणेनकिंचिद्बाध
कमितिस्वामियोगस्यशुभत्ववादिभिः परैरप्यवश्यमास्थेयम् ।
पराशरहोरायामपिहानिः कार्येत्येवोक्तमतोयदुक्तमाचार्येणत
नुपेस्मिन्नसौक्रियेतितदार्षशास्त्रसम्मतंयुक्तियुक्तंच । अतएवमु-
न्दरमिश्रैरप्येवमेवोक्तम् । क्रूरेतदंशेपिमतैवहानिरिति । यत्वा
चार्यटिप्पण्यामन्दाहशव्याख्यानंतल्लेखकदोषात्पतितमित्यादिग
तिस्विन्त्या । क्रूरोदयेयोपचयः सनावांशायुषीत्युक्तत्वान्नांशजे-
सौक्रियेतिसर्वमवदातम्यत्तुश्रीपतिपद्धतिटीकायामंशायुर्दायस्तु
लग्नबलाधिकत्वादेवात्प द्यतेतत्क्रूरयोगाद्धानिर्युक्तैवेतिवासनां
वदतासूर्यैर्गांशायुष्यवाहानिरितिस्वीकृतंतदसमेपरास्तम् । यद-
पिचवासनानभिज्ञतयाचक्रकलाभि रायुर्दायोलभ्यतेतदालग्नक्र

त्वाभिः किमित्यभिधायितदप्यसदेवेतिबोध्यम् । एवंदायांशान-
भिधायाधुनापिण्डनिसर्गजीवशर्मायुर्दायानयनमाह ॥

गोजास्त्वतिथिप्रभाकरतिथिस्वर्गान
खा:पैण्डजे नैसर्गेनखभूद्विगोष्टितिन
खा:पञ्चाशदर्कीद्गुणा:दायांशा:स्वगुणै
र्हताद्भिभगणांशासा:समाद्यायुषोस्व
र्गाप्ताश्चसमादिजै वमिश्रहृत्स्वांशैर्घटी
ष्वन्वितम् ॥

अर्कादितिल्यब्लोपेपञ्चमी । अर्कमारभ्येत्यर्थः । अत्र-
समादिपूर्वोक्तरीत्याग्राह्यम् । शेषंस्पष्टम् । स्वर्गाप्ताइति । सर्वे-
षांग्रहाणांदायांशाएकविंशत्याभक्तालब्धवर्षादिजीवशर्माचार्य-
मतेआयुः स्यात् । तद्धटयादिदायांशेभ्योष्टभक्तेलब्धघटीमुखेन-
युक्तंकार्यमित्यर्थः पिण्डायुर्वर्षादिसाधनोपपत्तिः प्रागुक्ता । नै-
सर्गिकेपिदायांशवर्षाद्यानयनयुक्तिः सैव । एवमेवप्रकर्तव्येजी-
वशर्मोक्तचन्द्रजद्युतिसारावल्यामुक्तेस्वकाद्वंहान्यादिकतत्रापि--
कार्यमित्युपपन्नम् । अथजैवेयुक्तिः जीवशर्मा । सप्तदशैकोद्वि-
यमाबसवोवेदाग्नहेन्द्राणाम् । वर्षाण्युच्चस्थानांमतोर्द्धं च । स-
ध्येंत्वनुपातात्स्यादानयनंशेषमत्रयत्किञ्चित् । पिण्डयुषिएवका-
र्यंतत्सर्वंगणिततत्त्वज्ञैरिति । अतस्तएवहानिसंस्कातादायांशाअ-
त्रापिग्राह्याइत्युपपन्नम् । उच्चस्थेद्युचरेदायांशाभगणांशमिता-
स्तत्रायुः परमंपरमायुरगांशतुल्यंपरमायुस्तुपञ्चदिनंविंशत्यधि-
कवर्षंशतम् । १२०।०।५।०।० अत्रपञ्चदिनानित्यक्ताशेषमायु

१२० परमाद्व्निताव्ह्तम्। अतोनुपात:। यदिभगणांशमितैर्दायांशै: ३६० परमायु: सप्तमांश १२० तुल्यमायुस्तदेष्टै: किमिति। अत्रहरघातोहर: २५२० ७ गुणा: १२० एतौगुणेनापवर्त्य प्राप्ताएकविंशति र्ह २१ रेभतोदायांशा: खगाप्तविघटीजैवमायुरित्युपपन्नम्। अथपञ्चदिनेभ्यआयु: साधनार्थमन्योनुपात:। यदिभगणांशै: ३६० पञ्चसप्तमाशा ५ आयुस्तदेष्टै: किंलब्धं दिनादिभवति तत्रद्यस्यादिफलानयनार्थमन्योपिषष्टिर्गुण: ६०। एवमत्रगुणघातोगुण: ३०० हरघातोहर: २५२० गुणहरौगुणेनापवर्त्य हरेकिंचिदधिकाअष्टौलभ्यन्तेतत्रस्वल्पान्तरत्वादष्टैवोपात्तास्तैर्भहृदित्याद्यप्युपपन्नम्। अत्रैवगुणहरौषष्ट्यापवर्त्य लतव: शरघ्नाद्द्विवेदभागाप्तघटीभिराद्यमितिमिश्रैरपिसुष्ठूक्तम्। अथप्रसङ्गात्श्रीपतिकृतप्रकारवासनोच्यते। तत्रपरमायुर्वर्षाणि १२० एषुपञ्चदिनान्येकवर्षं १ द्विसप्तत्यंशात्मिकानिसमच्छेदविधिनासंयोज्यजातंपर ७२ मायु:। ८६४१ अस्यसप्तमांशोयम् ८६४१ सचभगणांशमितै र्दायांशैर्दे ७२ तावदा ८६४१ ५०४ स्तदेष्टै: किमिति। अत्रदिनादिफलानयना ५०४ यपुनर्भगणांशागुणस्तुल्यगुणहारयोरपगमेग्रह: स्वोच्चहीनै: सचेरषड्भहीनोभचक्राद्विशोध्योयभागीकृत: सन्। कुवेदर्तुर्नागैर्हृतोवेदखाद्यैर्विभक्तोदिनाद्यंभवत्येवमायुरितिप्रकारोनिष्पद्यते। एकदेशिनस्तूच्चस्थेग्रहेशून्यमितमुच्चग्रहान्तरंस्यात्तदानीमेवपरमायुरगांशमितमायुर्भवतियदोच्चग्रहान्तरंशून्याधिकंस्यात्तदानुपात:। यदिशून्यमितैरन्तरांशै: परमायुर्षोंशोलभ्यतेतदेष्टग्रहोच्चान्तरभागै: किमितिलैराशिकेनवासनांव्यावर्णयन्ति। श्रीमच्छिवगुरुचरणान्प्रणम्यराशे: खहरत्वेनफलानन्त्यादेतदयुक्तमेवेतियद्वयंवदामस्तद्विद्वांसोविदांकुर्वन्तु।

मचशून्यसप्तहरघातेसप्तैवभवन्तीतिनखहरत्वमितिवाच्यम् । ख गुणः खमितिपाटीगणितोक्तेः । तस्मादपठितपाटीगणितेनसूर्येणायदुक्तं तत्पाटीगणितानभिज्ञतयायष्टिसाधनंभास्करोक्तंविषुवद्दिवसेव्यभिचरतीतिसुन्दरसिद्धान्तेज्ञानराजोक्तिवत्प्रत्यक्षंयं यदप्यायुष्मताशून्यमितैरन्तरांशैर्वर्षादिपरमायुरगांशोलभ्यतेतदेष्टैः किमितित्रैराशिकेनफलंदिनाद्यंभवतीत्युक्तंतदपिफलसन्यजातिमध्येतदितिपाटीगणिताज्ञानादेवेतिवोध्यम् । वस्तुतस्तुदिनादिकमेवफलमायातिपरंतत्रहेतुरपद्रूतिवद्गूढमित्युपरस्यते । अथैतेषुसिद्धेषुपिण्डायुष्वुलग्नायुरानयनमाह ॥

स्यात्क्षिप्ताःखनखोद्धृताविभतनोर्वर्षादि पैण्डत्रिकेलग्नायु ॥

विभतनोः विराशिलग्नस्य । शेषमुत्तानम् । अत्रोपपत्तिः । वृहज्जातके । होरात्वंशप्रतिममायुः प्रयच्छतीतिपिण्डायुः प्रकरणेभिहितत्वाल्लग्नमुक्तनवांशतुल्यमायुः सिद्धम् । ततोनुपातः । आभिः कलाभिः २०० चेदेकोनवांशस्तदेष्टविराशिलग्नलिप्ताभिः कतीतिननवांशभवेयुः । एकेननवांशेनैकंवर्षतदैर्भिर्नवांशैः कियन्तीतिनवांशसमान्येवायुर्वर्षाणीत्युपपन्नम् । पिण्डायुर्वदेवनिसर्गजीवशर्मोक्तकर्तव्यद्रत्युक्तेस्तत्राप्येतदेवायुरितियुक्तम् । नन्वंशायुषिपिण्डायुषिचांशप्रतिमंलग्नायुरितिसर्वैर्जातकक्रद्भिरुक्तमस्ति । आचार्योक्तप्रकारेणत्वंशायुषिलग्नायुः परमंद्वादशवर्षतुल्यंपिण्डायुषिपरमंनववर्षतुल्यमागच्छतितत्रकोहेतुरितिचेत् । शृणुतर्हि । पिण्डायुषिहोरात्वंशप्रतिममायुर्ददातीत्युक्तंतत्रनवांशाद्रतिपरमलग्नायुर्नवैववर्षाणि । अंशायुर्दायेतुकिंत्वत्रभांशप्रतिमंददातीत्यभिहितंतत्रभपदोपादानस्येदंतात्पर्यं-

लग्नं यस्य राशेर्नवमांशेवर्तते स राशिर्मेषादिर्यावत्संख्यो भवति तावन्त एवाब्दा इति । अतोंशायुषि परमसंख्यमायुर्द्वादशवर्षाणीति सिद्धम् । अंशायुषि वीर्यान्विता राशिसमं चायुः प्रयच्छन्तीति सत्यैरुक्तं पिण्डाद्यायुर्दायेषु तुल्यं नापि प्रामाणिकेन तथानोक्तं केनचिदेकदेशिनोक्तं तन्मतभेदेन बहुसंमतत्वादंशतुल्यमेवायुरिति पूर्वं मतं साधु । अतएवाह ॥

## निखिलैस्तदंशकसमं कैश्चिन्नतुल्यं स्मृतम् ॥

स्पष्टम् । तथा च श्रीपतिः । आयुष्ष्वथैतेष्वबलाढ्यलग्ने विहाय राशीन्कृतलिप्तिकेन । भक्ते द्विशत्या फलमब्दपूर्वं यत्स्याद्धि लग्नायुषि तच्च योज्यम् । १ । एतेषु पिण्डादिषु त्रायुषु । अबलं चार्थाद्बलिनं तल्लग्नं तस्मिन् । अबले बलाढ्ये वा लग्न इत्यर्थः । लग्नस्य राशीन्विहाय शेषभागानां कला द्विशत्या हृता लब्धमब्दादि यत्तल्लग्नायुषि लग्नायुर्निमित्तं योज्यं संग्राह्यमित्यर्थः । चर्मणि द्वीपिनं हन्तीतिवल्लग्नायुषीति निमित्तसप्तमी । आयुष्वथाप्येषु बलाढ्यलग्न इति पाठेऽपि शब्दो भिन्नक्रमस्तेन बलाढ्यलग्नेऽपि । अबले बलवत्यपि वा लग्न इत्यर्थः । बलाढ्यलग्नेऽपीति कथनसंमत्या पूर्वं लग्ने बलवत्यपि किंचिल्लग्नायुषि नन्वप्यस्मित्येतदर्थमिति मिश्रैः सम्यगुक्तम् । सूर्यज्योतिषिकैस्तु आयुस्तुथैतेष्वबलेविलग्ने इति पाठः कल्पितः । नचासौ युक्तः । बलवति लग्ने सत्यायुरनिर्देशे न्यूनतादोषप्रसङ्गात् । किंचित्वायुस्तथैतेषु बलाढ्यलग्ने इति पठित्वा तथैवायु । साध्यं राशितुल्यवर्षैर्योज्यमित्यर्थः । बलवति लग्ने सतीति व्याचक्षते तदपि न चतुरस्रम् । सबलेलग्न राशितुल्यवर्षयोगेनार्षशास्त्रविरोधादबलेत्वायुषोनुक्तत्वान्न्यूनतादोषतादवस्थ्याच्च । अथ परमतमाह ॥

यस्येशोऽधिबलस्तदेवहिपरैः ॥

यदांशेशोबलीतदांशतुल्यंतस्यायुर्यदिराश्यधिपोबलवांस्तदा राशितुल्यमितिपरैः कल्याणवर्मगुणाकरादिभिरुक्तं राशिनवांशनाथयोर्बलिनोः सतोराशितुल्यांशयुक्तंलग्नांशायुः कार्यमित्यर्थतएवसिद्धम्। अन्यदप्याह ॥

तेनाढ्यमन्यैर्यदंशायुर्वत्तु ॥

अंशैः सममायुरंशायुषातुल्यमंशायुर्वत्तेनतुल्यमित्यादिनावतिप्रत्ययः। यल्लग्नायुः स्यात्लिप्ताः खनखोद्धृताद्रुल्यादिप्रकारानीतंतेनराशिनाथेबलोपेतेराशितुल्यायुषायुक्तं कार्यमंशेशबलिन्यंशसमेनयुक्तंकार्यंद्विगुणंकार्यमितियावत्। एवमन्यैरुक्तं सिद्धान्तमाह ॥

अथचांशतुल्यमखिलोक्तंग्राह्यमेवादिमम् ॥ २४ ॥

अत्रैवकारोभिन्नक्रमस्तेनाखिलोक्तमंशतुल्यमादिममेवग्राह्यमित्यर्थः। अथैषांचतुर्णामायुषांव्यवस्थामाह ॥

अंशायुस्तनाविनेऽधिकबलेपैण्डंनिसर्गं विधौस्याच्चेतुल्यबलद्वयोर्युतिदलंतज्जायुषोस्त्रयः। त्र्यायुषिचिबलैर्निहत्यचयुतिर्वीर्यैक्यहृद्वाचिजायुर्युत्याचिलवोऽथजैवमुदितंचेद्धीनवीर्यास्त्रयः॥ २४ ॥

अत्राधिकबलइत्यत्रलिङ्गविपरिणामेनाधिकबलायामिति-
तनुविशेषणंबोद्धव्यम्। स्त्रियांमूर्तिस्तनुस्तनूरित्यभिधानेनतनु-
शब्दस्यस्त्रीलिङ्गत्वात्। षड्रूपाधिकंषड्बलैक्यंयस्यसोधिकबलस्त-
त्रलग्नेधिकबलेंशायुः साध्यंसूर्येधिकबलेपिण्डायुश्चन्द्रेनैसर्गिकं-
साध्यम्। चेल्लग्नार्कचन्द्रास्त्रयोपिहीनवीर्यास्त्रिरूपाल्पबलास्त-
दाजीवशर्मायुर्दायः साध्यः। यस्यत्रिरूपाधिकंषड्रूपाल्पंबलंस-
मध्यबलस्तत्रलग्नेमध्यबलेंशायुः सूर्येपैण्डंचन्द्रेनिसर्गजंसाध्यम्।
अथमिश्रायुः संभवज्ञानपूर्वकंतत्साधनमाह। स्याच्चेदिति। अ
स्यायंतात्पर्यार्थः। यदिलग्नार्कचन्द्रास्त्रयोपिषड्रूपाधिकबलाअ-
थवात्रयोपिमध्यबलास्तदाचलग्नबलेनदिनादिकमंशायुः संगुण्य
सूर्यबलेनपिण्डायुः संगुण्यचन्द्रबलेननिसर्गायुः संगुण्यैषांयोगं
लग्नार्कचन्द्रबलानांयोगेनभजेल्लब्धंवर्षादिस्फुटंमिश्रायुर्भवतीत्य
यंमुख्यः। अथवांशपैण्डनिसर्गायुर्योगस्यतृतीयांशोमिश्रायुः स्यां
त् अथयदिद्वौषड्रूपाधिकबलौयद्वात्रयाणामपिषड्रूपाधिकबला-
भावेद्वौमध्यबलौतदातत्तदायुस्तत्तद्बलेनसंगुण्यानयोर्योगंतयोर्द्व-
योर्बलयोगेनभजेल्लब्धंस्पष्टंमिश्रायुः। मुख्यः पक्षोयम्। यद्वात-
त्तदायुषोर्योगस्यार्द्धंमिश्रायुः स्यात्। अत्रोपपत्तिः। सारावल्या-
म्। अंशोद्भवंविलग्नात्पैण्डंभानोर्निसर्गजंचन्द्रात्। एतेषांयो-
बलवानेकतमंतस्यचिन्तयेदायुः। लग्नदिवाकरचन्द्रास्त्रयोपिब-
लरिक्ततायदायान्ति। परमायुषः स्वरांशंददतिखगाजीवशर्मो-
क्तम्। अतोयदुक्तंतद्युक्तम्। अथयदिद्वौरूपाधिकबलौवातदा-
त्तद्बलवशाद्दायुर्द्वयप्राप्तौसत्याविनिगमकाभावादेकतरायुरवल-
म्बानंकर्तुमुचितइत्यायुर्द्वयोर्योगार्द्धंग्राह्यमितिपर्यवसितम् परं-
तत्तद्बलवशात्प्राप्तिवितिद्वयोर्बलयोरैकाकारतायांतदायुषोर्द्धम-
युक्तंविलक्षणयोर्द्वयोर्बलयोरैकाकारतायोगार्द्धेविश्रान्ता।

तत्रानुपातः । यदि बलद्वययोगार्द्धेनैतदायुषोर्द्धं लभ्यते तदायुः प्रापकैतद्बलेन किमित्यत्र हरस्यछेदांशयोः परिवृत्तौ द्वयं गुणो द्वयं हरोऽस्त्येवेति तुल्यत्वाद्द्वयस्य नाशे कृते एतदायुष एतद्बलं गुणो बलद्वययोगो भाजकः । एवमेव द्वितीयायुर्दाये तद्बलं गुणो बलद्वययोगो भाजकः एवं भाजकयोरैक्ये तत्तदायुस्तत्तद्बलेन संगुण्य योगस्य बलैक्येन भजेल्लब्धं मिश्रायुर्भवतीत्युपपन्नम् । एवं त्रिष्वपि षड्रूपाधिकबलेषु मध्यबलेषु वोपपत्तिर्वेद्या । त्रयतुल्यबलाद्दूल्यत्रविविषष्ट्यंशपर्यन्तं बलसमत्वं विवक्षितमिति केनचिदुक्तं तदसङ्गतम् । ततस्तादृशतुल्यबलत्वे प्रकारद्वयसाधितमिश्रायुषस्तुल्यत्वोपलब्धेर्न लाघवात्त्रिजायुर्युत्यास्त्रिलवत्वे वोक्तं स्यात् । तस्माद्धीनत्वं मध्यत्वमुत्तमत्वमादाय तुल्याधिकतैत्वे व समीचीनमिति मन्तव्यम् । किंच पराशरेण त्रिजायुर्योगस्य तृतीयांशं विहायैवं मिश्रायुरुक्तम् । आयुस्वपरमंहृत्वा स्वेन बलेन च । विभजेद्बलयोगेन प्रत्याणादायएवसद्दूति । तस्माद्द्विषष्ट्यंशपर्यन्तबलसाम्यं ग्राह्यमिति पचोनयुक्तः । यत्तु त्र्यायुर्योगार्द्धं त्यायुस्तृतीयांशोवा कार्यस्तच्छ्रीधराचार्यसंमतं मिश्रायुरिति श्रीपतिनोक्तं तदशुद्धम् । यतश्चाह श्रीधराचार्यः । अंशायुर्लग्नवीर्येणपैण्डभानोर्निसर्गजम् । चन्द्राच्चान्द्रेणसर्वाणिसयोज्यैकत्वभाजयेत् । लग्नार्कचन्द्रवीर्याणांसंयोगेस्फुटंफलम् । वर्षादिकंभवेदायुः श्रीधराचार्यसंमतमिति ॥ अथहीनबलवत्वादिलक्षणं तथाशायुरेवबहुसंमतत्वाद्ग्राह्यं तथेदमायुः केषांघटतदूति ॥

त्र्यल्पेहीनबलोबलीषडधिकेवीर्यैर्ग्रहस्त्रीदयोभिन्नंस्वस्वमतेस्मृतायुरितियत्प्राज्ञैर्व्यवस्थापितम् अंशायुर्बहुसंमतंभव

तियत्सत्यंच सत्योदितंस्याद्धर्मोष्टसुशील पथ्यमुभुजांनस्यादिदंपापिनाम् ॥ २६ ॥

त्यधिकेषडल्पेबलेग्रहोलग्नं वामध्यबलमित्यर्थात्सिद्धम् । शेषमतिरोहितार्थंव्याख्यातंचस्वकृतटीकायायाचार्यैः । बलोपपत्तिः । षडेवबलानिसन्तीतिप्रत्येकंयदिसंरूपात्मकंरूपंबलग्रह्यतेतदाषड्रूपाणिभवन्तीतिषड्रूपबलवान्प्रत्येकंसंपूर्णबलोपपन्नोवलीयुक्तएव । षड्रूपादधः संनिहितंमध्यबलंषड्रूपाणामधः सांनिध्यंत्वर्द्धात्मकविरूपपर्यन्तम् मध्यबलाधः संनिहितंविरूपाल्पहीनबलमितियुक्तमेव । अथशिष्यभ्रान्तिनिरासार्थमाह ॥

हानिर्यास्तमितेरिभेप्यनुमतांशोदथेल्पबुद्ध्यानतद्यस्माच्चैष्टिकआश्रयैस्तिनिखिलैःपिण्डादिषूक्त्यातत:आयुःसौरमिदंयतोब्दगणनासौरात्ततःसूरिभिःप्रोक्तंसत्यमसद्यदल्पकथितं नाचचकंसावनम् ॥ २७ ॥

केनचिदाचार्येणअस्तमितेरिभेयाहानिवर्द्धल्यंशतुल्यासांशोत्थेआयुर्दाये अल्पासौबुद्धिस्तयाहेतुभूतयाअनुमतास्वीकृतानतदितितन्मतंनसमीचीनमित्यर्थः । अल्पबुद्धेरतिकरणेतृतीया । शेषमाकरेस्पष्टम् । एवंमनुष्यायुर्विधिवद्व्यवस्थाप्याधुनातत्परमायुरन्यप्राणिनापरमायुः पुरःसरमायुर्दायानयनंचाह ॥

पञ्चाहंनखभूसमा १२०।०।५ कृकरि
घृणांव्याघ्रजादेर्नृपा १६ गोकाल्पो
ष्ट्रजिना २४ स्तथोष्ट्रखरयोस्तत्वानि
२५ सूर्याः १२शुनाम् । अश्वायुःपर
मंरदा ३२न्नृवदिहानीयायुरेषांपरा
युर्निघ्नंनृपरायुषाचविहृतंतेषांस्फुटा
युर्भवेत् ॥ २८ ॥

एतदप्याकरेस्फुटम् । उपपत्तिस्तुयदिमनुष्यपरायु १२० । षाप्रमाणीभूतेनेदमानीतंमनुष्यवदायुरश्वादीनामवाप्य ० । ५ तेतदास्वस्वपरायुषोकिमित्यनुपातेनसुगमा ॥ सद्वासनायास-मकारिवृत्तिर्दिवाकरेणामलकेशवोक्तेः । सलग्नखेटायुषएषतत्वदायाधिकारः परिपूर्तिमागात् ॥ ५ ॥ इतिदिवाकरप्रणीता-याकेशवपद्धतिटीकायांप्रौढमनोरमाभिधायामायुर्दायाध्यायःपञ्चमः । अथदशाध्यायआरभ्यतेऽतत्रादौदशास्वरूपंतच्छुभाशुभफलंचाह ॥

यस्यायुर्यदसौदशास्यचशुभेष्टोच्चस्वभां
शेतथारोहानीचपरिच्युतस्ययदिसा
कष्टारिनीचांशभे ॥ व्यक्तोच्चेत्स्वरो

# ह्विणीभवतिसामध्योच्चमित्रस्वखांशे सदृष्टयुतस्फुरत्करबलिष्ठेष्टाधिकेस्याच्छुभा ॥ २९ ॥

यस्यग्रहस्ययदायुरसौतस्यदशास्यात् । यचादसूशब्दस्यविधीयमानलिङ्गताशैत्यंहियत्साप्रकृतिर्जलस्येत्यादौप्रसिद्धा । दैवेयुगसहस्रेद्वे ब्राह्मः कल्पौतुतौनृणामित्यस्यव्याख्यावसरेलिखितंचक्षीरस्वामिना । सर्वनाम्नाविधीयमानानूद्यमानलिङ्गग्रहणेकामचारइति । इष्टोच्चस्वभांशेवर्तमानस्यग्रहस्यदशाशुभास्यात् । भंचांशश्चभांशम् । इष्टश्चउच्चंचस्वश्चतेषांभांशंतस्मिन् मित्रस्योच्चस्यवास्वस्यवाराशौनवांशेवातिष्ठतोग्रहस्य दशाशुभास्यादित्यर्थः । नीचपरिच्युतस्यदशारोहास्यात् ॥ यदिनीचपरिच्युतोग्रहः अरेःशत्रोनीचस्यवास्वंशकेनवमांशेस्यात्तदारोहिणीदशाशुभापिकष्टास्यात् । मिश्रफलदाभवतीत्यर्थः । त्यक्तमुच्चं येन सतथातादृशेग्रहेदशाऽवरोहिणीस्यात् । इयमशुभफलप्रदा । उच्चमित्रस्वराशौमांनवांशेयदित्यक्तोग्रहः स्यात्तदावरोहिणीदशापिमध्यास्यात् । सदृष्टयुतस्फुरत्करबलिष्ठेष्टाधिकेग्रहेसतिदशाशुभास्यात् । सद्भिःशुभग्रहैर्दृष्टयुतः सदृष्टयुतः । स्फुरन्तःकरायस्यसतथा । बलिष्ठःषड्रूपाधिकबलवान् । इष्टेनाधिकइष्टाधिकःअत्रकर्मधारयःसमासः । तदेतदुक्तंबृहज्जातके । भ्रष्टस्यतुङ्गादवरोहसंज्ञामध्याभवेत्सासुहृदुच्चभांशे । आरोहिणीनीचपरिच्युतस्यनीचारिभागेष्वधमाभवेत्सा । लग्नदशायाःफलंतत्रैवोक्तम् । उभयेधममध्यपूजितादृक्काणेश्चरभेषुचोत्क्रमात् । अशुभेष्टसमास्थिरेक्रमाद्धोराया:परिकल्पितादशेति ॥ इदानींदशाक्रममाह ॥

स्यादाद्याहि दशाधिकौजसइहाङ्गार्का-
ब्जकानांततस्तत्केन्द्रादियुजामथद्विबहु-
वीर्यक्रमेणैवहि । चेदोजःसमतायु-
षोधिकतयायुस्तुल्यताचेद्दशामौल्या--
त्स्यादुदितक्रमात्क्रमविधौवीर्यंहित-
थोच्यते ॥ ३० ॥

अङ्गार्काब्जकानांलग्नसूर्यचन्द्राणांमध्येऽपियस्यायःकिंचिदप्य धिकषड्बलैक्यस्याद्यादशास्यात् । बलसाम्येयस्यायुर्वर्षाण्यधिका नितस्यप्रथमादशा । आयुःसाम्येतुपूर्वंपठितस्यप्रथमादशा । लग्नार्कचन्द्राणांलग्नार्कयोर्लग्नचन्द्रयोर्वाबलायुषोः साम्येलग्नस्यप्रथमंपठितत्वादाद्यादशा । सूर्येन्द्वोर्बलायुषोस्तुल्यत्वेसूर्यस्यप्रथमादशेत्यपिध्येयम् । केचित्त्वाङ्गेन्दूदयानामितिपठन्ति । तदयुक्तम् । लग्नार्कचन्द्राणामिति-तिक्रमस्यसर्वैः पठितत्वात् । तथा चगर्गः । बलीलग्नार्कचन्द्राणामिति । बृहज्जातके । उदयरविशशाङ्केति लघुजातकेलग्नार्कशशाङ्कानामिति । श्रीनाभेयपद्धतौ लग्नार्कशीतरश्मीनामिति । होरामकरन्दे । विलग्नार्केन्दूनामिति । श्रीपतिपद्धतावपि । लग्नादित्योडुपानामिति । एवंसर्वेषां प्रामाणिकरीत्यापाठक्रमात्तस्यचबलायुःसाम्येदशाक्रमनिर्णयप्रयोजकत्वाच्चाङ्गार्काब्जकानामितिपाठःसाधीयान् । अब्जएवाब्जकः स्वार्थेकप्रत्ययः । ततोनन्तरंलग्नार्कचन्द्रान्यतमस्यायुस्यपूर्वादशा-तस्मात्केन्द्रपणफरापोक्लिमस्थानांग्रहाणांदशाःस्युःकेन्द्रस्थस्यपूर्वंदशानन्तरंपणफरस्थस्यानन्तरमापोक्लिमस्थस्येत्यर्थःअथयदिकेन्द्रा

दिगतादित्यादयोभवेयुस्तदा वक्ष्यमाणवीर्याधिक्यशालिनोग्रह-स्याद्याद्दशातदनन्तरन्ततोल्पजबलस्यतदुपरितस्मादप्यल्पबलस्य-दशाख्यादित्यर्थः। यदिरवीन्द्वन्यतरस्माद्याद्दशातदातत्केन्द्रादि-स्थलग्नस्य पितृख्याख्यादितिबोध्यम्। बलसमत्वेधिकवर्षदातुः पूर्वादशानन्तरमल्पवर्षदातुर्दशाख्यात्। वर्षसाम्येतुमौढ्यात्सूर्य-सांनिध्यवशेनास्तमनादुदितक्रमाद्दशाख्यात्। मौढ्यादितिल्य-ब्लोपेपञ्चमीमौढ्यंसंप्राप्येत्यर्थः। यस्येनासन्नभावेस्तंप्राप्तस्यपूर्व-मुद्गमस्तस्यपूर्वादशानन्तरोदितस्यानन्तरंदशा। अन्योदयसाम्ये-उदितक्रमान्नग्रार्कसोमावननिजबुधेत्याद्युक्तक्रमाद्दशाख्यादिति-ध्येयम्। वृहज्जातकेवर्षसाम्येप्रथमोदितस्यप्रथमंदशेत्युक्तंतचप्र-थमोदितस्येतिसामान्यतः कथनमर्थद्वयलाभार्थम्। सूर्यवशा-त्प्रथममुदितः प्रथमोदितइत्येकोर्थः। प्रथममुदितउक्तइतिद्वि-तीयः। अनयोर्मध्येबहुसंमतत्वात्प्रथमपक्षोमुख्यइतरोगौणइ-त्याहुः। तचसूर्यवशादुदयसाम्येप्रथमपक्षेणनिर्णयासंभवेगौण-पक्षेणनिर्णयोयुक्तएव। तथाचयवनेश्वरः। वयोधिकोयः प्रथमो दितोवाग्रहः सपूर्वपठितोदशेशः। अस्यार्थः। बलसाम्यमनतायां-सत्यायोवयसायुषाधिकः सपूर्वदशेशः। यदिचायुः साम्यमपि-तदासूर्यवशात्प्रथमोद्गतोयः सपूर्वदशेशः। यद्युदयसाम्यमपि-तदायः पूर्वपठितः सदशेशइति। अलंदमवधेयम्। चन्द्रस्या-द्यायांदशायांकेन्द्रादिगानांलग्नार्कभौमगुरूणांबलायुषोः सा-म्येलग्नार्कयोः सूर्यवशात्प्रथमोद्गमनलक्षणप्रथमपक्षस्यासंभवा-दपरपक्षाश्रयणेनलग्नस्यप्रथमोक्तत्वादाद्यादशाततोर्कस्यद्वितीया भौमगुर्वोर्यः सूर्यवशात्प्रागुदितस्तस्यतृतीयापरस्यचतुर्थीदशा। उदयसाम्येतुगौणपक्षेणनिर्णयेप्राप्ते प्रथमंपठितत्वाद्भौमस्यतृती-याचतुर्थीगुरोरिति। अतएवमिश्रोक्तपद्धतौतस्यापिसाम्येप्रथमो-

दितस्य लग्नार्कचन्द्रार्बुधादिकस्येति । यत्तु मिश्रकृतश्रीपति-पद्धतिटीकायां लग्नस्य तृतीया चतुर्थीसूर्यस्येत्यादि दृश्यते तल्लेखक-दोषात्पतितमिति ध्येयम् । इदं पुनरिहावधेयम् । यदि केन्द्रे कोपि-नग्रहस्तदापणफरस्थ इत्वादशानन्तरमापोक्लिमस्थस्येत्यादि । त-दाह वराहः । नहि नफलविपाकः केन्द्रसंस्थाद्यभावे भवति हि फ-लपक्तिः पूर्वमापोक्लिमेपि । इदानीं लग्नदशाप्राथम्ये सति तत्के-न्द्रादिगग्रहदशाक्रमावगमार्थं बलं साधयति ॥

चेल्लग्नाद्यदशास्वभावजफलद्वौजांसि पाकक्रमे ॥

औजांसि स्वस्वषड्बलैक्यानि । पाकक्रम इति निमित्तसप्तमी-पाकोदशा तत्क्रमनिमित्तं बलानि स्युरित्यर्थः शेषं स्पष्टम् । अ-त्रोपपत्तिः । लग्नदशाप्राथम्ये लग्नाद्भावाः सन्तीति लग्नात्के-न्द्रपणफरादयो भावा सिद्धा जातास्तथा सत्येकोभावांशतुल्ये मु-ख्यकेन्द्रं न्योगौणकेन्द्रे स्थित इति संपूर्णन्यूनभावफलात्मिकया मु-ख्यगौणकेन्द्रादिस्थित्या वचनाद्बलेन च दशाक्रमविचारे प्राप्ते सम-भावफलेषु सर्वेषु ग्रहेषु यथास्थितबलेन निर्णयो यस्याधिकं बलं पूर्वं त-स्य दशा ततस्तदूनबलस्येति । तत्र रूपतुल्ये समभावफले कल्पिते-त्रानुपातः । यद्यखिलखगानां रूपतुल्यसमभावफले ग्रहस्थितद्ब-लतुल्यं बलं तदास्मिन् भावफले किमिति स्वभावजफलघ्नौजांसीत्यु-पपन्नम् । अथार्कस्य चन्द्रस्य वाद्यदशायां केन्द्रादिगदशाक्रमज्ञा-नार्थं वीर्यमाह ॥

अर्केन्द्वोश्चेत्प्रथमाखगोदयबलांघ्रिभै-न्यवर्गैऽह्नि तः । स्वैर्वैर्गैश्च बलैर्हताब

लमिहैक्यम् ॥

स्पष्टमेतदाकरे। अथैकदेशिमतमाह ॥

॥ मूलितैक्यंपरे ॥

परेआचार्याएवंवदन्तिमूलं संजातयेषांतेमूलितास्तदस्पसं-नातंतारकादिभ्यइतधितीतच्। तादृशानासप्तवर्गस्थानानङ्क-नामैक्यं बलंस्यादिति। अथप्रसङ्गेनरिष्टकररिष्टहरबलमाह ॥

अथैवंरिष्टदभङ्जेऽधिकबलोभङ्क्ता तदारिष्टहृत् ॥ ३१ ॥

खगोदयबलाङ्घ्रिरित्यनेनैवप्रकारेणरिष्टदभङ्क्तजेबलेसा-ध्येइत्यर्थः। अत्रप्रगृह्यत्वाभावः प्रामादिकः। अतोरिष्टदभङ्क्त जेत्रहुबलेइतिपाठ्यम्। एवंरिष्टदभङ्क्तजेबलेसाधितेसतीतिस-प्तम्यन्तत्वेनयथाश्रुतमेवव्याख्येयमितिवाय दिरिष्टभङ्क्तारिष्टक-रापेक्षयाबहुवीर्यस्तदारिष्टभङ्गः स्यात्। अयमुख्यः पक्षः। यदा तयोर्बलसाम्यंतदानेनमुख्यपक्षेणनिर्णय।संभवेपक्षान्तरेणनिर्ण-यमाह ॥

भङ्क्तूरिष्टकृतोर्हितार्हितशुभासत्वं चनीचोच्चभास्ताद्यस्यात्रतांविचार्य मतिमान्रिष्टस्यभङ्गं वदेत् ॥

भङ्क्तृरर्थाद्रिष्टभङ्क्तुः अत्रढ्लोपेपूर्वस्यदीर्घइतिसूत्रेणदी-र्घत्वम्। अत्रवर्गइत्यध्याहर्तव्यम्। नीचोच्चभास्ताद्यस्येत्यत्राद्य शब्देनमूलत्रिकोणस्वाधिमित्रमित्रामित्राध्यमित्रगृहजयपराज योक्तातानांसंग्रहः। मतिमानितिहेतुगर्भम्। तेनायमर्थः संप

न्नः रिष्टेशभङ्गेश्वरयोर्वर्गेराशिहोरादौशुभासत्वंसौम्यपापसंबन्धित्वंत थास्वोच्चत्रिकोणस्वाधिमित्रमित्रवैर्यधिवैरिगृहजयपराजयोत्या- तास्तनीचेषुसमाश्रितानांसम्बन्धित्वंहिताहितत्वविशिष्टं विचि- न्त्यम् । रिष्टेशभङ्गेशयोःसप्तवर्गेशान्सौम्यपापान्दर्शितस्वोच्चा- दिनीचान्तसमाश्रितांश्चतेहिताएतेत्वहिताइतिचिन्तयेदित्यर्थः। रिष्टेशभङ्गेशयोःसौम्यपापत्वचिन्तनंविहायदर्शिततुङ्गादिनीचान्त समाश्रमत्वंचहिताहितत्वेनचिन्त्यम् । तथाचश्रीधरः । वर्गना- थान्विचिन्त्यादौसौम्यपापान्हिताहितान् । नीचोच्चगांस्तथा- न्यांश्चशोधयेत्तान्परस्परमिति ॥ अत्रसमस्याद्ईमित्रत्वाद्ईशत्रुत्वे नहिताहितत्वसाम्यात्समोनगणनीयइतिप्रोचुः । एकेनशुभेन- समंमित्रमधिमित्रञ्च । एकेनपापेनसमानममित्रमध्यमित्रञ्च । द्वाभ्यांशुभाभ्यांसमंत्रिकोणंस्वगृहञ्च । चतुर्भिःशुभैःसमानःस्वो- च्चोयुद्धजयश्च । चतुर्भिःपापैःसमोनीचस्थश्चोत्पातिकोयुद्धजितो- स्तंगतश्च । तथासतिरिष्टकरस्यसप्तवर्गेशानांसौम्यपापत्ववशेन- स्वाधिमित्रादिगृहस्थितिवशेनदर्शितस्वोच्चादिवशेनचयाहितसं ख्यायाचाहितसंख्यातयोरन्तरकृत्वहितमहितंवाशेषंग्राह्यम्। ए वंभङ्गेश्वरस्यापिहितमहितंवाशेषंग्राह्यम् । पश्चाद्रिष्टेशभङ्गेश- योर्द्वयोरपियद्हितात्मकंशेषंतद्ारिष्टभङ्गोथवारिष्टकर्तुरहिता- त्मकशेषाद्रिष्टभङ्क्तुर्हितात्मकेशेरिष्टभङ्गस्तथारिष्टहरस्याहितशे- षाद्रिष्टकरस्यहितशेषेधिकेरिष्टभङ्गोन्यथातुरिष्टमेवेत्याप्याहुः ॥ अथरिष्टकररिष्टहरबलानयनेतावदुपपत्तिरुच्यते । वृद्धयवनः । हर्तापमृत्योर्बलिनस्तुवर्गेभङ्गस्तदारिष्टकरोदलीचेत् । रिष्टकर्ता- न्यूनबलस्यसप्तवर्गेन्यूनबलोरिष्टकर्तुरपित्वयारिष्टहर्ताबलिनः स- प्तवर्गेबलाधिकस्तदारिष्टभङ्गोन्यथातुरिष्टमेव । अयमर्थः रिष्टक- र्तान्यूनबलस्यराशौन्यूनबलस्तथान्यूनबलस्यहोरायान्यूनबलद्-

त्यादितदपिचयारिष्टभङ्क्त्राबलिनोराशौबलीतथाबलिनोहोरायांबलीत्यादि । अत्रप्रागुक्तयवनवाक्यैराशेर्द्विवर्गात्मकत्वमित्यष्टौवर्गास्तैतारिष्टशुभङ्गिशयोर्बलमष्टसुस्थानेषुस्थाप्यंतत्रद्वे स्थाने-ग्रहसम्बन्धिनीषट्स्थानानिहोरादिसम्बन्धीनि । अत्ररिष्टशुभ-ङ्गिशयोर्द्वयोरपिसप्तवर्गेशबलानांसाम्येयथास्थितत्तद्वर्गेशबलेन-निर्णयइतिस्थितौसुगमार्थमष्टतुल्येसमबलेपूर्वस्थापनेनसाकमेकक्रमलाभार्थंकल्पितेत्वत्रैराशिकम् । द्वयोरपिवर्गेशानांसर्वेषामष्टतुल्येसमबलेस्थितेयदिराशीशस्याष्टतुल्येसमबलेराशिस्थ ब-लतुल्यम्बलंतदास्मिन्राशीशबलेकिमितिराशिस्थबलंराशीशबलेनगुणनीयमष्टभिर्भाज्यमेवंराशिसम्बन्धिद्वितीयस्थानस्थ बलं-राशिनाथबलेनगुणनीयमष्टभिर्भाज्यमनयोर्योगेराशिस्थबलमे-कस्थानस्थमेवराशीशबलेनगुण्यञ्चतुर्भिर्भजनीयमित्युपपन्नम् । एवंहोरादिस्थबलंहोरादीशबलेनगुण्यमष्टभिर्भाज्यमित्यप्युपपन्नम् । यद्वाद्वयोरप्यष्टस्थानस्थेतुल्येसमेबलेस्थितेयदिराशिस्थेसम-बलेष्टतुल्येराशीशबलतुल्यम्बलंतदस्मिन्राशिबलेकिमितिसए-वराशिस्थराशीशबलघातोष्टभक्तनिष्पन्नइत्यनयोः पक्षयोर्नकोपि विशेषइतिमिश्राः ।

पश्चादेषामैक्यंसर्वबलमितियुक्तम् । यत्सर्वबलमधिकन्तन्मूलमप्यधिकमितिसर्वबलस्यग्रहणेनकापिहनिः । यत्तु प्रत्येकं मूलमादायतदैक्यंसर्वबलमितिमतंतन्निर्मूलत्वादुपेक्ष्यम् । किंचयच्चरिष्टहर्तुर्बलयोगाद्रिष्टकर्तोबलयोगोधिकस्तच्चरि ष्टहर्तुर्बेबलमूलयोगाद्रिष्टकर्तृबलयोगः स्वल्पइत्यादिदूषणंधीमद्भिरवलोक्यं यत्तु श्रीपतिनेष्टकष्टगुणितबलयोरन्तराद्बलमित्युक्तान्तच्चयतस्तथासतिरिष्टकरस्यभङ्गकरस्यवाबलपूर्णपदोच्चचेष्टाबलयोगोरूपंतदेष्टकष्टबलयोःसाम्यात्तदन्तरबलेशून्येसर्वबलस्यशून्यत्वात्ष-

संस्कारस्तु दिनाहंतुल्याभी राव्यहंतुल्याभिर्वानतघटीभिरेताश्च- रकालास्तदेष्टनतघटीभिः किमित्यनुपातलब्धकलाभिः कार्यंद्र- त्याहुभांध्यक्कतः ॥ अथतेग्रहाःस्पष्टाःकार्याः । ततःस्फुटार्केन्दु- भ्यांविरविचन्द्रलवारविहृताद्दल्यादिनातिथिश्चसाध्या । तस्या- घटिकाद्यन्दशाप्रवेशकालिकरवीन्दुभ्यांसाधितत्वाद्दशाप्रवेशका लादनन्तरंस्याद्दतोदशाप्रवेशनाडीसुखेनसंस्कृतंसूर्योदयाज्जाय तद्दतिधीमद्भिरवलोक्यम् । यातिथिरानीतासायदिपञ्चदशभ्यो- न्यूनातदाशुक्लपचोन्यथाकृष्णपचद्दतिज्ञेयम् । संक्रमवशान्मा- सोज्ञेयः ॥ अत्रेदमवधेयम् । स्पष्टसूर्यस्यभुक्तानांभोग्यानांचां- शानांकलाःस्पष्टगत्याभक्तालब्धदिनादिद्वयेनदशाप्रवेशकालात्प्रा गूर्ध्वंचक्रमेणपूर्वापरसंक्रांतीभवतः ।

ततोयस्मिन्दशापतावधिकोमासिदशाप्रवृत्तिस्तत्रयदिमेषसंक्र- मणंयदासचैत्रएवंवृषादिसंक्रमणेवैशाखादिसंज्ञा । यदातुपूर्व- संक्रान्तिं पूर्वदशावितारप्रागपरसंक्रान्तिरग्रिमदशांऽतानन्तरं भवतितदासौसंक्रांतिमासोधिमासोग्रिममासनामाभवति । यदासंक्रान्तिद्वयंतन्मासएतदाचयमासद्दति । प्रथमपचेहर्गणः सप्ततष्टः करणादिवाराद्दतोवारोभवेत्तन्नाडिकाद्यमेवसूर्योदया- दिष्टकालः । द्वितीयेअहर्गणोजन्मनाडीपलयुतः सप्ततष्टोजनुर्वा राद्दतोवारस्तदधः स्थनाड्याद्यमेवेष्टकालः । तृतीयेद्युगणः पूर्व- दशाप्रवेशनाडीपलयुतोद्भितष्टः पूर्वदशादिवाराद्दतोवारोधःस्थ- नाडीमुखमेवेष्टकालः । प्रथमपचे जन्मकालिकमूर्यंमिद्धान्ताहर्ग- णेयदिदशासावनंयोज्यतेतदाहर्गणनाड्योराव्यर्द्धेनोनाः सूर्योद- यादिष्टकालः स्यादितिपूर्वैः श्रीपत्यादिभिर्युगार्कचक्रैर्युगसूर्यसा वनद्दत्यादिनाजडकर्मकृतम् । अत्रतुमयातस्माल्लाघवंदर्शितम् । यत्त्विदंप्राण्डित्यमात्रंपूर्वोक्तत्वान्मयाप्युक्तमित्यु,क्तंतदापाततद्दति

वेदितव्यम् । अत्रोपपत्तिः । वर्षायनर्तुयुगपूर्वकमत्रसौरादित्यु-
क्तेर्यद्दशादिवसाः कृतास्तेतुसौराएव । अथतेषांसावनीकरणम-
न्तरेणदशाप्रवेशकालिकलग्नादिसाधयितुंनपार्यतइतिसावनी-
करणार्थमुपायः । तत्रैतेसूर्यसिद्धान्तमतेयुगसावनाः १५७७९
१६८२८ सौराश्च १५५५२००००० एषामन्तरम् । २२७१७
८२८ । अथानुपातः । यदियुगसौरदिनैरेभिः १५५५२०००००
सौरापत्तयासावनेष्वेतावदाधिक्यं २२७१७८२८ लभ्यतेतदेष्टैः
किमिति । अत्रगुणकहरयोदशांशेन १७४७५२५ गुणकेपवर्त्ति-
तेत्रयोदशलब्धाः १३ तथातेनैवहरेपवर्त्तितेकिंचिन्यूनाः खाङ्का-
ष्टौ ८९० लब्धास्तेसंपूर्णागृहीताः । तस्मादघस्त्रीभूतदशाविकु-
हताखाङ्काष्टभक्तालब्धिभ्यः सावनेभ्यः सौराणांन्यूनत्वात्पृथक्-
स्थाघस्त्रीभूतदशायुक्ताकार्येत्युपपन्नम् परमत्रहराधिक्येफलाल्प
त्वनियमात् खाङ्काष्टहरस्याधिकस्योपादानाद्युगसौराः पृथक्-
स्थास्त्रयोदशघ्नाः खाङ्काष्टभक्तालब्धान्वितायुगसावनेभ्योल्पाजा-
यन्तेषांयुगसावनानांचान्तरमेतत् १४२३ ॥ अथयदियुगसौरव-
र्षैः ४३२०००० इदमन्तरं १४२३ तदेष्टैःकिमितिफलस्यदिना-
त्मकत्वाद्दिनात्मकफलमायास्यति अत्रदिनघटीस्थानेशून्यमेवो-
पलभ्यतइतिपलात्मकफलानयनार्थंषष्टिवर्गोगुणः ३६०० अस्या-
न्तरस्यचवधेजातइष्टवर्षाणागुणः ५१२२८०० हरश्चायं ४३००
०० स्वल्पान्तरमनयोरुपेक्ष्यनाशिकृतेदशावर्षतुल्यान्येवपलानी
त्युपपन्नम् । पूर्वंसाधितसावनेष्वेतावन्न्यूनमासीदतोयोज्यमि-
त्यपिसाधुपूर्वदशाप्रवेशकालीनमध्यमार्कः पूर्वदशामासादितुल्य
राश्यादियुतः पूर्वदशासावनोत्थमध्यमार्कजन्मकालीनमध्यार्क-
योगतुल्यापरदशाप्रवेशजमध्यार्केणयथासमोभवतिनतथास्पष्टा-
र्कइतिमध्यमार्कएवदशामासादियोजनंयुक्तम् । शेषोपपत्तिः ।
सुगमाबालावबोधाच । इदानींदशाशुभाशुभफलमाह ॥

चन्द्रः प्राप्तदशेश्वरस्य सुहृदुच्चस्थस्य च संस्थो
दशानाथाद्धीनवसप्तमोपचयगो दद्याच्छु
भानीति च । यस्मिन्भे च विदुः स जन्मनि
तनुस्थायादिभावो यदा तत्तद्वृद्धिकरोऽथ
तत्क्षयकरः प्रोक्तेतरस्थानगः ॥ ३७ ॥

प्राप्तदशायाः स्वामिनो यस्मिन्गृहमुच्चस्थानं तत्रस्थश्चन्द्रः शुभानि दद्यात् । अथवा कर्कटस्थश्चन्द्रो यद्वा दशेशात्त्यत्र्यनवमसप्तमदशमैकादशस्थानान्यतरस्थानस्थः शुभानि दद्यात् । एवं शुभफलप्रदे चन्द्रे सति अत्र दशाकाले यस्मिन्राशौ चन्द्रः स राशिर्जन्मकाले यस्मिन्भावे पतित तद्भाववृद्धिकरो भवति । एतदुक्तं भवति । यदि चन्द्राधिष्ठितराशिस्तनुभावे स्यात्तदा शरीरसौख्यं यदि धनादिभावे तदा धनादिसौख्यमिति । यदि तु शत्रुमृत्युव्ययभावेषु स्यात्तदा तद्भावनाशः । सत्यः कथयनि विपरीतं रिपुफषष्टाष्टमे ष्विति वराहवचनात् । यदि प्रोक्तान्यस्थानस्थश्चन्द्रः स्यात्तदा तदधिष्ठितराशिर्यस्मिन्लग्नादिभावे तन्नाशः स्यात् । अरिमृत्युव्ययस्थो यदि स राशिस्तदा तद्भाववृद्धिः ॥ अथान्यदाह ॥

यद्द्रव्यङ्कचरस्य भावगृहदृग्योगादि सर्वं
फलं योज्यं वृत्तिकृतिर्बलादि हृदशायां
चाथयोर्वैरयुक् ॥ पापः पापदशां विशे-
त्स च विपत्कर्तोऽथ तङ्कङ्कदस्तत्काले बलवा

न्खगःशुभसुहृद्दृष्टेष्टसद्वर्गगः ॥३८॥

खचरस्य यद्द्रव्यं ताम्रं स्यान्मणिर्हेमेत्यादिकङ्कथितं तत्सर्वं दशायां योज्यम् । तथा भावफलदृष्टिफलराशिफलादिकं सर्वं फलजातन्दशायां योज्यं । वृत्तिकृतिर्जीविका । अयं देवदत्तः कीनकर्मणा जीवनं करिष्यतीत्यादिरूपा दशायां योज्या नन्वेतत्कथं योज्यमित्यत आह । बलादिति । सबले यथोक्तं फलं संपूर्णं मध्ये हीनबलेति स्वल्पमित्यर्थः । अथानन्तरं वैरिणा युक् युक्तः शत्रुरिति यावत् । क्रूरस्य मूलदशापतेः शत्रुर्यदि क्रूरो मूलदशायामन्तर्दशां करोति तदा विपत्तिः स्यात् । अत्रायमभिसंधिः । यदि क्रूरः क्रूरदशामध्येऽन्तर्दशां कुर्यात्तदा विपत्तिः स्यात् । यदि त्वन्तर्दशाकारको ग्रहः पापो मूलदशापतेः शत्रुस्तदा महती विपत्तिः यथोक्तं सारावल्याम् । क्रूरदशायां क्रूरः प्रविश्य चान्तर्दशां कुरुते । पुंसां स्यात्संदेहस्तदारियोगे सदैव महानिति वैरियुगित्यपपाटः अथैतद्दशारिष्टस्यापवादं वदति । तद्भङ्गदइति । अन्तर्दशाकाले कश्चित्बली ग्रहः शुभमित्रेणदृष्टोऽथवा शुभसप्तवर्गगोऽथवेष्टाधिकः स रिष्टभङ्गः स्यात् । तथोक्तं सारावल्याम् । प्रवेशे बलवान्खेटः शुभमित्रैर्निरीक्षितः । सौम्याधिमित्रवर्गस्थो मृत्युकृन्न भवेत्तदेति । अथाष्टवर्गफलस्य स्वल्पत्वाधिकत्वकल्पनाविचारमाह ॥

खेटस्तस्य यदष्टवर्गजफलं पूर्णं शुभं जन्म
तन्निर्व्यां द्विपुचस्वभोच्चभसुहृद्भस्व
त्रिकोणेस्थितः । दुष्टं मध्यफलं विपर्यय
गतस्यानिष्टमत्युत्कटं भस्तं स्वल्पतरं

खगस्यचवदेत्ज्ञात्वाबलंतत्वतः ॥३९॥

जन्मतन्विन्द्वोः वृद्धिषुस्वभोच्चसुहृद्गृहस्वत्रिकोणेचयः खेटः अस्तितस्ययच्छुभमष्टवर्गफलंतत्पूर्णंस्यादित्यन्वयः तनुश्चेन्दुश्चतन्विन्दूजन्मनितन्विन्दूतयोः जन्मलग्नजन्मराश्योरित्यर्थः । वृद्धिषूपचयभवनेषु । स्वोच्चभहृद्गृहस्वत्रिकोणइत्यत्रसमाहारद्वन्द्वः स्वराशौस्वोच्चे स्वमित्रगेहेस्वमूलत्रिकोणइत्यर्थः। अथतादृशग्रहस्यदुष्टंमध्यफलंस्यात् । दुष्टंफलंमध्यंस्यादित्यर्थः । विपर्ययगतस्यजन्मराशिजन्मलग्नयोरपचयस्थानेषुनीचभेशत्रुभेवास्थितस्यग्रहस्यानिष्टफलमयुक्तंस्यात् । शस्तंसमीचीनंफलंस्वल्पतरंस्यात् । अत्रजन्मलग्नराश्योरुपचयस्थस्यसतः शत्रुनीचस्थितस्याथवातयोरपचयस्थसतः स्वोच्चादिषुस्थितस्यशुभमशुभंसमंस्यात् । एवंजन्मलग्नराश्योरेकस्मादुपचयस्थोन्यस्मादपचयस्थोयदिस्वभोच्चादिष्ववस्थितस्यशुभमधिकमशुभमल्पंस्यात् । यदितादृशोनीचारिभेस्थितदातस्याशुभमधिकंशुभंन्यूनंस्यादितिध्येयम् । खगस्यबलंतत्वतोज्ञात्वाफलंवदेत्यथाग्रहेसंपूर्णबलेशुभंचफलंसंपूर्णंमध्यबलेमध्यंहीनबलेहीनमित्येतत्प्रथममवधार्यानन्तरंप्रोक्तप्रकारेण--न्यूनाधिकत्वंवाच्यमित्यर्थः । अथोदर्कस्यबहुविधत्वात्कालस्यदुर्लंघ्यत्वात्क्वचिज्जातकफलस्यव्यभिचारेकिंकर्तव्यमित्याह ॥

जीवेत्क्वापिविभङ्गरिष्टजशिशूरिष्टं विना
मीयतेथाद्योब्दः शिशुदुस्तरोपिचपरीक्षा
यैंषुनोपचिका । कार्याप्रश्ननिमित्तपूर्वशकु
नैरत्नन्स्वमानंधियाहोराज्ञेनसुबुद्धिनाच

## बहुघोदकस्यकालोवली ॥ ४० ॥

क्वापिविगतोभङ्गोयस्यतादृशंयद्रिष्टंतत्रजातः शिशुर्जीवेत्। अत्रढ्लोपेपूर्वस्यदीर्घोणइतिसूत्रेणदीर्घत्वम्। क्वापिरिष्टंरिष्टं विनापिशिशुः मीयतेप्राणैः वियुज्यतइत्यर्थः मीङ्हिंसायाम्। हिंसाचप्राणवियोगः। दिवादिभ्यः श्यन्। मीयतइत्यस्यमरणार्थवाचकत्वमाख्यतचन्द्रिकायामप्युक्तम्। परैतिप्रैतिमरणेम्रियतेचप्रमीयते। संतिष्ठतेसमाप्नोतिविरसत्यारमत्यपीति ॥ १ ॥ केचितुमृङ्प्राणत्यागइतिधातोर्म्रीयतइतिरूपमत्रपठन्ति तदसत्। दीर्घस्यासंभवात्। म्रियतइतिपाठेतुछन्दोभङ्गः। तस्मान्मीयतइत्येवपाठः साधीयान्। क्वापिविङ्गभरिष्टजशिशुरिष्टंविनामीयतेइति। तत्रफलस्यव्यभिचारदर्शनात्सुबुद्धिनाहोराज्ञेनजन्मकालंसूक्ष्मतरंसम्यग्लक्षयित्वाधिया बुद्ध्याहोराग्रन्थान्मुहुर्मुहुर्विलोक्यशुभंविज्ञायपत्रिकाकार्येत्यन्वयः। वस्तुतस्तुरिष्टजशिशुजीवनंप्रबलभङ्गंविनानुपपद्यमानंभङ्गाभावेपिभङ्गमाक्षिपति। यद्यपिशास्त्रेपुरुषेणभङ्गोनोपलभ्यतेनैतावताशास्त्रदोषः। नह्ययंस्थाणोरपराधोयदेनमन्धोनपश्यतीतिन्यायात्। नचप्रत्यक्षेणशास्त्रेनुपलभ्यमानोपिरिष्टभङ्गः कथंकल्पनीयतइतिवाच्यम्। अधुनातनप्रचरद्वस्यग्रन्थेष्वनुपलब्धोप्यप्रचरद्वस्यगर्गादिप्रणीतमुख्यजातकशास्त्रेभविष्यतीत्युत्रश्यंफलकल्पनस्ययुक्तत्वात्। अन्यथाशास्त्रप्रामाण्यविलयापत्तेः। एवंरिष्टानुपलम्भेपिमरणेरिष्टस्फलबलात्कल्प्यन्तथासतिशास्त्रप्रामाण्यमव्याहतमेवेतिबोध्यम्। आघोब्दःशिशोर्दुस्तरः अपिचपरौद्वौद्वितीयाब्दौदुस्तरौ। अष्टपत्रिकानोकाया। आदिमवर्षेनुक्तावधिकानि। रिष्टानिसंध्यायांहिमदीधितिहोरापापैर्भान्तगतैर्मरणायेत्यादिनाबहून्युक्तान्येवंद्वितीयतृतीययोरपिबहूनिकथिता

निमन्त्रितेषांसर्वेषांप्रचरद्वस्थग्रन्थेषुभङ्गानामसत्त्वेवानत्तद्नेक-रिष्टतत्तद्भङ्गकृद्ग्रहगणप्रबलदुर्बलभावेनरिष्टतत्तद्भङ्गान्यतरनिर्णयस्यदुर्गमत्वाद्ब्रर्षत्रयपर्यन्तम्पत्रिकानकार्या । वर्षत्रयानन्तरंतु-बल्यरिष्टोक्तस्तद्भङ्गानामतनग्रन्थेपुसत्वात्स्वल्पत्वेनतन्निर्णयस्यापिकर्तुंशक्यत्वाद्वर्षत्रयानन्तरञ्जन्मपत्रिकाकार्येतिभावः । अथयदिकश्चिदाग्रहशीलोवर्षत्रयमध्यएवपत्रिकाकार्येतिवदेत्तदा-प्रश्ननिमित्तपूर्वशकुनैःप्रश्ननिमित्तपूर्वैर्लग्नवलोपश्रुत्याद्यैः शकुनैश्चयदिवाप्रश्नैर्निमित्तपूर्वैःक्षुतदुर्वचनादिभिः शकुनैःपूर्णकुम्भादिश्चशुभंज्ञात्वापत्रिकाकार्या । ननुप्रश्ननिमित्तशकुनाद्यन्यतरेणैवशुभम्विचिन्त्यपत्रिकाकार्येतिलाघवादाचार्यस्यवक्तुमुचितंतत्कथंसर्वैरपिशुभम्विचार्यकार्येत्युक्तमित्यतआह । बहुधोदर्कस्य-कालोबलीति । बहुप्रकारंभाविफलंबलवदित्यर्थः तथाचाहुः । स्वप्नोनिमित्तं शकुनाःस्वकर्मशारीरमागन्तुकमद्भुवानि । दोषाभिचारग्रहचारकालकाम्यानिचैवस्विविधःफलाध्वा ॥ १ ॥ एवंफलमार्गाणांबहुत्वाद्बहुप्रकारैःशुभंविज्ञायपत्रिकाविधातव्येतिभावः । रक्षन्स्वमानमिति । प्राचीनगर्गादिग्रन्थानांलुप्तत्वादिदानीन्तनग्रन्थेतुसकलरिष्टतद्भङ्गानामसत्वादिदमित्थमेवभविष्यतिनोचेन्मयायज्ञोपवीतंत्याज्यमित्यादिरूपाप्रतिज्ञानकार्या-किन्तुप्रचरद्वस्थग्रन्थपर्यालोचनयैतादृशमस्तीतिवाच्यमितिभावः । अत्रसंरक्षमानंनिजंहोराज्ञेनेतिवाठश्चेत्साधुः । अन्यथार-क्षन्स्वमानमित्यस्यनिराकांक्षतयानन्वयादनन्वितमपार्थकमित्यपार्थकता । क्वचित्पुस्तकेवावास्वमानन्धियेतिपाठोदृश्यतेसतुनितरांसाधुःस्वमानंचाचारक्षतेत्यर्थः । क्वचित्तुमानन्धियारक्षतेतिपाठःसोपिसाधीयान् ॥ अथग्रन्थालङ्कारमाह ॥

नन्दिग्रामेकेशवोविप्रवर्योयोभूद्धोराशा-

स्वसङ्गम्विलोक्य ॥ तेनोक्तेयंपद्धतिर्जा-
तकीयाचत्वारिंशद्वृत्तबद्धासुबोधा ४१

स्पष्टार्थम् ॥ इदानींग्रन्थपाठकफलावाप्तिव्याजेनग्रन्थप्रशं-
सामनुष्टुप्छन्दसाह ॥

येसुबुधांपठन्तीमामग्र्यांजातकपद्धति
म् । होरावित्पदवींयान्तिलोकेमानंय
शःसुखम् ॥ ४२ ॥

सुगमम् ॥ गौतस्युत्तरतोखर्तिनगरेगोलज्ञविद्द्युतेगोलया
मसमोह्वयेमुनिभरद्वाजान्वयेदैववित् ॥ योभूत्सुज्ञदिवाकरोबुध
वरःश्रीकेशवोस्यात्मजाद्दैवज्ञार्यगणेशसंज्ञकगुरोर्लब्धावबोधांश-
कः ॥ १ ॥ तस्मान्महेशार्चनलब्धसौख्यःश्रीकृष्णनामाऽजनिवि
प्रमुख्यः ॥ कालक्रियाज्ञामवताहियेनदैवज्ञशब्दोभुरिसार्थकोऽभू
त् ॥ २ ॥ तस्माद्भूतांम्ननयौतदाद्योमीमांसकाद्योगणकोन्नृसिं
हः । शिरोमणेर्वार्तिकमुक्तियुक्तंसौरज्ञनाष्यंसमकारियेन ३ स
द्विद्याराजमानःसुखदलितपरोद्दण्डचण्डाभिमानःसिद्धान्ताभि
ज्ञसुज्ञद्विजवरनिवहोद्गीतकीर्तिःसुमूर्ति । विद्यामासाद्यसद्यो-
विद्वतिविबुधाचार्यकस्पर्द्धिभावंद्दष्यन्तोयस्यशिष्याःसजयतिज
गतिश्रीशिवाख्योद्वितीयः ॥ ४ ॥ श्रीमन्नृसिंहसुतवर्यदिवाकरा
ख्यःसव्यद्धतेर्गणककेशवनिर्मितायाः । टीकामिमांविविधयुक्ति-
विशेषरम्यामाज्ञांशिवस्यसुगुरोःकृतवानवाप्य ॥ ५ ॥ पूर्वोक्ति-
विश्वासवतांप्रतीतिर्नतन्निरासेनविनायतःस्यात् । यतोमयाऽ-
खण्डिपुरातनोक्तिर्गुरूपमेभ्योस्तुनमोमहद्भ्यः ॥ ६ ॥ दोषेषुब-

२७

इहृदयाःखलुतानितान्तसुष्ठावर्णोढपिचुमन्दककण्ठकादौ ॥ सन्तःप्रशान्तहृदयास्तुगुणान्भजन्तःकुर्वन्तुमङ्गलमितिप्रकृतंगुणौघम् ॥ ७ ॥ आनन्दिविप्रवरतामपिभूर्युपेत्यज्योतिर्ज्ञसन्निधिमिलत्सुरभानुभावः । तेजःप्रसन्नतरसाधुतमोहरागोभास्वान्विभातुसशिवःसकलैःकमिवः ॥ ८ ॥ अर्थद्वयवाची ॥ भास्वान्-श्रीसूर्यःशिवोतद्गुरुःशेषंस्पष्टम् । शाकेगजाब्धीधिशरेन्दु१५४८तुल्येसिद्धान्तवित्प्रौढमनोरमाख्या ॥ दिवाकरोक्ताबुधकेशवोक्तेर्वृत्तिःसयुक्तिःसमगात्समाप्तिम् ॥

इति श्रीसकलगणकचक्रचूडामणि श्रीकृष्णदैवज्ञसुत श्रीमन्नृसिंहगणकस्यसुतेनसम्प्रदायप्रवर्तकाचार्य श्रीमत्शिवज्योतिर्विल्लब्धविद्येनदिवाकरेणविरचितायां श्रीमत्केशवसांवत्सरोक्तजातककर्मपद्धतेष्टीकायां सवासनायां प्रौढमनोरमाभिधायां ग्रन्थसमाप्त्यलङ्कारः ॥

॥ समाप्त्यलङ्कारः ॥

:**:—:**:—:**: